THE

KASHI SANSKRIT SERIES

( *HARIDĀS SANSKRIT GRANTHAMĀLĀ* )

( Karmakānda Section, No. 14. )

122



THE

# S'RĀDDHAVIVEKA

OF

## M. M. S'RĪ RUDRADHARA



* श्रीः *

# श्राद्धविवेकः ।

## महामहोपाध्याय श्रीरुद्रधरकृतः ।

'वेदाचार्य' अनन्तरामडोगराशास्त्रिणा टिप्पण्यादिभिः
परिष्कृत्य संशोधितः ।



PUBLISHED BY

JAYA KRISHNA DAS HARIDAS GUPTA,

*The Chowkhamba Sanskrit Series Office,*

BANARAS.

1948

# भूमिका ।

अथाद्य चिरलो निबन्धः "श्राद्धविवेक"—नामा जगत्प्रसिद्धः सर्वदेशीयैर्वाजसनेयि( यजुर्वेदि ) भिः कर्म्मसु समादृतो यथानामप्रमाणितविषयव्यापकः पुनर्म्मुद्रापयित्वा प्राकाश्यतां नीतः । निर्म्माता चास्य मिथिलाभिजनो भूसुरवरो हरिहरान्ववायविशुद्धो (१)लक्ष्मीधर (पति) शर्म्मात्मजो हलधरशर्म्मानुजतमः श्रीरुद्रधरशर्म्मा । एतन्निर्म्मिताश्च "शुद्धिविवेक"–"वर्षकृत्य"-व्रतपद्धत्यादयोऽन्येऽपि निबन्धास्समुद्भूय सर्वत्र प्रथिताः समादृताश्च सर्वैः कर्म्मठद्विजैः ।

समयश्चास्य वैक्रमाब्दीय १५०० पञ्चदशशताब्द्यात्मक इति प्राचीनतालपत्रलिखित ४८४ चतुरशीत्यधिक–चतुश्शताब्दीय-समुपलब्धपुस्तकादवगम्यते । अयञ्च जगत्प्रसिद्ध-धर्म्मशास्त्रीयश्राद्धचिन्तामण्यादि–पञ्चदशचिन्तामणिनिबन्धृवाचस्पतिमिश्रादपि प्राचीन इति तदीयनिबन्धेष्वेतन्निबन्धनामोल्लेखादवसीयते ।

एष श्राद्धविवेकः पुरा मुम्बय्यां काश्यां च मुद्रापयित्वा प्रकाशितोऽपि आदर्शपुस्तकादिदोषान्नातिविशुद्ध इति पुनरस्य परिष्करणपूर्वकमुद्रापणमभिलष्यद्भिः काशिकचौखम्बा-पुस्तकालयाध्यक्षैर्हरिदासगुप्ततनुजन्मभिर्जयकृष्णदास-गुप्तमहोदयैरभ्यर्थितोऽहं सहायकपुस्तकानि(२)चतुराण्यासाद्य संशोध्य चोपयुक्तटिप्पण्या समलमकार्षं प्रार्पयञ्च तस्मै महाभागाय पुनर्मुद्रापयितुम् ।

एतस्य संशोधने पूर्वोक्ततालपत्रलिखितप्राचीनपुस्तकसंग्रहीतृभिरन्तर्वाणि-वैयाकरणविविधधर्म्मशास्त्रीय-प्राचीननिबन्धविद्भिरधिकाशि तीर्थन्यासपूर्वकं वासमधिकुर्वन्त्या मिथिलेशश्रीमल्लक्ष्मीश्वरसिंहस्य ज्येष्ठमहाराज्ञ्या धर्म्माधिकारिपदे वर्त्तमानैः श्रीमद्व्रजविहारिशर्म्ममहाशयैः कृतं साहाय्यकं धन्यवादपुरस्सरं मुहुः स्मरामि ।

तदेतस्य पुनर्मुद्रापणे-पूर्वोक्त-सुगृहीतनाम्नां गुप्तवराणामेवाधिकार इति सप्रमोदमावेदयामि ।

सम्भावयामि च सुप्रयत्नसंशोधितेऽप्यस्मिन्निबन्धे "श्राद्धविवेके" सीसकाक्षरयोजक-दृष्टिदोषेण मदीयदृष्टिदोषेण वोपनता अशुद्धीर्गुणैकपक्षपातिनो दूषणवाचंयमाः सुधियः क्षन्तार इति विरमामि निरर्थकाद्विस्तरादिति ।

संपादकः ।

---

( १ ) एष परिचयोऽस्य "शुद्धिविवेक" नामकग्रन्थान्तलेखादवसीयते ।

( २ ) अत्रैकं पुस्तकं 'क' संज्ञया "मद्यथापुस्तकालयीयं' काशिकम्, द्वितीयं च 'ख' संज्ञया सारस्वतश्रीदमनरोत्तममिश्राणामस्मद्गुरुवराणाम् , तृतीयञ्च 'ग' संज्ञया काशिकराजकीय पुस्तकालयीयम् , चतुर्थं च 'घ' संज्ञया तालपत्रलिखितप्राचीनपुस्तकमिति विदाङ्कुर्वन्तु विदन्तः ।

इति ।

---

॥ श्रीः ॥

# श्राद्धविवेकः

## महामहोपाध्याय-श्रीरुद्रधरविरचितः ।

प्रसीदतु स नो हरिस्त्रिदशवैरिसीमन्तिनी-
नवीनविधवाजनव्रतविधानदीक्षागुरुः ।
यदीयपदपङ्कजस्मरणवीतसर्वैनसः,
पुनर्भवगतागतं जहति वीतमोहा बुधाः ॥ १ ॥

चिरन्तनानेकनिबन्धसिद्धः सुसम्प्रदायानुगतः स्फुटार्थः ।
नत्वा हरिं रुद्रधरेण सम्यग्वितन्यते श्राद्धविवेक एषः ॥२॥

श्राद्धं नाम वेदबोधितपात्रालम्भनपूर्वकप्रमीत(१)पित्रादि-देवतो(२)द्देशको द्रव्यत्यागविशेषः । तच्छ्राद्धमिह स्वरूपभेदेतिकर्त्तव्यता(३)मन्त्रनिर्णयाविहितनिषिद्धदेशकालद्रव्यब्राह्मणादिकथनेन विविच्यत । तत्रादौ संक्षेपतः स्वरूपभेदः कथ्यते । तत्र बृहस्पतिः—

नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं तथैव च ।
पार्वणं चेति मनुना श्राद्धं पञ्चविधं स्मृतम् ॥

एतद्व्याहृतं भविष्यपुराणे—

अहन्यहनि यच्छ्राद्धं तन्नित्यमिति कीर्त्तितम् ।
वैश्वदेवविहीनं तदशक्तावुदकेन तु ॥

---

(१) 'पित्रादि' ना० क० । (२) 'द्देशेन' क० (३) 'कथन' क० ।

एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते ।
तदप्यदैवं कर्तव्यमयुग्मान् भोजयेद् द्विजान् ॥
कामाय विहितं काम्यमभिप्रेतार्थसिद्धये ।
पार्वणेन विधानेन तदप्युक्तं खगाधिप ॥
वृद्धौ यत्क्रियते श्राद्ध वृद्धिश्राद्धं तदुच्यत ।
सर्वं प्रदक्षिणं कार्यं पूर्वाह्णे तूपवीतिना ॥
अमावास्यां यत्क्रियते तत्पार्वणमुदाहृतम् ।
क्रियते वा पर्वणि यत्तत्पार्वणमिति स्थितिः ।

अत्र नैमित्तिकपदेन षोडशप्रेतश्राद्धान्यपि संगृह्यन्ते । एकोद्दिष्टरूपत्वात्तेषाम् । पार्वणपदेन (१) गोष्ठीश्राद्धाद्यपि स्मृत्यन्तरेणोक्तं संगृह्यते । तेषां सर्वेषां पार्वणविधिना विधानात् । अत्र यद्यपि 'पर्वणि भवं पार्वणम्' इति व्युत्पत्तिः तथापि व्युत्पत्तिमात्रमिदम् । वस्तुतो देवश्राद्धपूर्वकं षट्पुरुषश्राद्धं पार्वणम् । अत एव—

क्षयाहे पार्वणं कुर्वन्नधोऽधो याति मानवः

इति श्राद्धं निषिद्धय—

अहन्येकादशे प्राप्ते पार्वणं तु विधीयते ।

---

(१) गोष्ठीश्राद्धलक्षणम्—

'गोष्ठ्या यत्क्रियते श्राद्धं, गोष्ठीश्राद्धं, तदुच्यते ।
बहूनां विदुषां संपत्सुखार्थं पितृतृप्तये ॥ १ ॥

श्राद्धस्य गोष्ठ्यां वार्त्तायां क्रियमाणायां तज्जनितोत्साहेन यत्क्रियते श्राद्धं तद्गोष्ठीश्राद्धम् । बहूनां विदुषां गोष्ठ्यां समुदाये तीर्थश्राद्धादौ युगपत्कर्त्तव्यतया प्राप्ते पृथक्पाकाद्यसम्भवे सम्पदा सम्भूयश्राद्धसामग्रीसम्पादनेन यत्सुखं तदर्थं यन्मिलितैः क्रियते श्राद्धं तद्गोष्ठीश्राद्धमिति शङ्खधरकल्पतरुप्रभृतयः ।

इत्यादि स्मृतिषु देवश्राद्धपूर्वकषट्पुरुषश्राद्धविषयतयैव(१) विधिरुपपद्यते। अन्यथा पर्वव्यतिरिक्तकाले पार्वणस्यासम्भवाद्विधिनिषेधानुपपत्तिः। स्मृतिसारमहार्णवहलायुधकल्पतरुपितृभक्तिषु स्मृतिनिबन्धेष्वपि 'औरसक्षेत्रजाभ्यां साग्निकाभ्यां मृताहे पार्वणं कर्तव्यम्' इति यल्लिखितं तदपि सङ्गच्छते। अन्यथा तद्वचनमसंभवादयुक्तमेव स्यात्। लोकेऽपि च प्रामाणिकास्त्वपरपक्षीयप्रतिपदादिश्राद्धेष्वपि पार्वणपदं प्रयुञ्जते।

श्राद्धारम्भे प्रथमं श्राद्धीयद्रव्यसेकः—

नाप्रोक्षितं स्पृशेत्किञ्चिच्छ्राद्धे दैवे च कर्माणि।

इत्यत्र न स्पृशेन्न दद्यादित्यर्थः। अनेन वाक्येन प्रोक्षणप्राप्तौ तत्पुण्डरीकाक्षोच्चारणेनेति क्वचिन्निबन्धे लिखितम्। पुंडरीकाक्षस्मरणेनेति क्वचित्। तत्र—

शङ्खचक्रधरं विष्णुं द्विभुजं पीतवाससम्।
प्रारम्भे कर्मणां विप्र पुण्डरीकं स्मरेद्धरिम्॥

इति मूलवाक्यम्। यद्यप्यत्र स्मरणमेव विहितमस्ति तथाप्युच्चारणस्य स्मरणपूर्वकतयोच्चारणे स्मरणमायात्येवेत्याविरोध एवेत्याचारानुगृहीतमुच्चारणं क्रियते। तत्राविरुद्धफलकीर्तनमपि क्रियतेऽस्मत्सम्प्रदाये। तेन 'पुण्डरीकाक्षः पुनातु' इत्युच्चार्य द्रव्यसेकः। ततः सङ्कल्पः। तत्र 'अद्य पार्वणश्राद्धमहं करिष्ये' इति पितृभक्तौ सङ्कल्पः। अस्मत्सम्प्रदाये तु तिथ्युल्लेखपूर्वकः पित्रादीनां प्रत्येकं गोत्रसम्बन्धिपदानामनुकीर्तनपूर्वकः सङ्कल्पः क्रियते। तत्र नामगोत्राद्युच्चारणपूर्वकः सङ्कल्प इति युक्तः पक्षः।

(१) 'निषेधो विधिश्चोपपद्यते' क०।

तथा हि—

नान्दीमुखे विवाहे च प्रपितामहपूर्वकम् ।
वाक्यमुच्चारयेत्प्राज्ञो ह्यन्यत्र पितृपूर्वकम् ॥

इत्यनेनानुपूर्वीविशेषस्य कथनात् सामान्यतः पित्राद्यानुपूर्वी प्राप्यते । सा नियम्यते । अत आनुपूर्व्या उच्चारणं प्राप्तम् । गरुडपुराणादौ श्राद्धप्रयोगलिखने पित्राद्युच्चारणवाक्यं स्फुटमेव । तत्तत्तिथिविशेषादेः श्राद्धे प्रयोजकतया देशकालोत्कीर्तनमपि युज्यते । तथा च 'अद्यामुकमासीयामावास्यायाममुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकशर्मणाममुकगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्मणां पार्वणश्राद्धमहं करिष्ये' इत्येवं सङ्कल्पः कर्तव्यः । अतएव पितृभक्तावेकोद्दिष्टश्राद्धे नित्यश्राद्धे चास्मल्लिखितक्रमेणैव सङ्कल्पवाक्यं लिखितम् । ततो गायत्रीजपः । तत्र—

उपविश्य जपेद्धीमान् गायत्रीं तदनुज्ञया । इति ।

यद्यपि वारसङ्ख्या न श्रूयते तथापि स्थानान्तरीयगायत्रीजपादौ प्रायशो वारत्रयाभिधानेनात्रापि वारसङ्ख्याकाङ्क्षायां सैवोपतिष्ठत इति प्रामाणिकाचारोपष्टम्भेन वारत्रयनियमः । जपे च विशेषः । केचित्प्रणवव्याहृतिरहितां शुद्धामेव गायत्रीं जपन्ति । केचित्प्रणवव्याहृतिपूर्वां जपन्ति । तत्र द्वितीयः पक्षो युक्तः । तथाहि—

प्रणवः पूर्वमुच्चार्यो भूर्भुवः स्वस्ततः परम् ।
गायत्रीप्रणवश्चान्ते जपो ह्येवमुदाहृतः ॥

इति योगियाज्ञवल्क्यवाक्येन गायत्रीजपविधाने सर्वत्र

प्रणवव्याहृतिपूर्वकतया व्यवस्थापितत्वात् । नच 'अन्नोत्सर्गानन्तरं सप्रणवां सव्याहृतिकां गायत्रीं जपेत्' इति कात्यायनसूत्रेण प्रणवव्याहृतिसाहित्याभिधानादन्यत्र तयोरसाहित्यं पर्यवस्यतीति वाच्यम् । वाक्ययोर्भिन्नवक्तृकत्वात् । तथाहि प्रथमं गायत्रीजपविधायकं ब्रह्मपुराणवाक्यम्, द्वितीयं जपविधायकं कात्यायनसूत्रम् । एककर्तृके च विधाने विशेषविधिर्विशेषनिषेधाभ्यनुज्ञाफलको भवति । पुराणे सर्वशाखाप्रत्ययमेकं कर्मेति न्यायात् । योगियाज्ञवल्क्यविहित (१) प्रणवव्यहृतिसाहित्यस्यावश्यकोपस्थितेश्च । नच तत्साहित्यस्यावश्यकोपस्थितौ कात्यायनसूत्रे तत्साहित्याभिधानमनर्थकमापद्येतेति वाच्यम् । कात्यायनसूत्रं कल्पः । कल्पे च न्यायलभ्यस्य प्रमाणान्तरसिद्धस्य चार्थस्यैकीकृत्याभिधानम् तेन तत्साहित्ये सूत्रस्यानुवादकता परिभाषावाक्येनैव साहित्यप्राप्तेः सिद्धत्वात् । तस्मात् प्रणवव्याहृतिसहिताया एव गायत्र्याः प्रथममपि त्रिर्जपः । सुगतिसोपाने त्रिरिति स्फुटमेवोक्तम् । तत्र 'देवताभ्य' इति त्रिर्जपः । तत्रापि संप्रदायभेदः ।

देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।
नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ॥

इति वाजसनेयिभिः पठ्यते । 'नमः स्वधायैः स्वहायै नित्यमेव भवन्तु' इति तु सामगैः पठ्यते । इति केषाञ्चिद्विभागः केषाञ्चिद्वैपरीत्येन विभागः । तत्रास्माकं प्रथमः पक्षः । अत्रोपदेश एव शरणम् । तत आसनोत्सर्गः स निर्विवादः । तत आवाहनम् ।

(१) 'वाक्यैः' क० ।

तत्रापात्रकेऽपि श्राद्धे 'विश्वान्देवानहमावाहयिष्ये' पितॄनहमावाहयिष्ये' इति प्रश्नः क्रियत इति सम्प्रदायः। ततोऽर्घकरणम्। तत्र 'शन्नोदेवीः' इति जलप्रक्षेपः। 'तिलोऽसि' इति तिलप्रक्षेपः। तत्र स्वाहान्तोऽयं मन्त्रो वाजसनेयिभिः पठनीयः(१) कात्यायनैश्च। वाजसनेयिकल्पे कात्यायनसूत्रे स्वाहान्तस्यैवोपदेशात्। नच लिपिमात्रमत्र शरणम्। परम्परासिद्धत्वादुपदेशस्य। गुणिसर्वस्वनाम्निमन्त्रव्याख्यानग्रन्थे पित्रुद्देश्यकतया स्वधान्तोऽयं मन्त्र इति भ्रमो हेयः। कात्यायनसूत्रे स्वाहान्तस्यैवोपदेशादित्यभिधानेनोपदेशस्य परंपरासिद्धतया स्थैर्यात्। अत्र पवित्रोपरि जलान्तरं वाजसनेयिनः केचिद्ददति। सामगानामुदकान्तरदानमेतदिति कृत्वा (२)नेति केचिद्ददति। तत्र—

दत्तदर्भोदके हस्ते विप्रेभ्यश्च पृथक्पृथक्।

इति वायुपुराणवाक्यं प्रमाणम्। (३) ( तच्च सर्वविधिसाधारणम् ) नियामकाभावादिति सर्वेषां यजुर्विदामपि जलान्तरदानमुचितम्। ततो 'या दिव्या' इति पाठः। तत्र 'आपः शिवाः सँ स्योनाः सुहवा' इत्यत्र केचित्प्रथमं तालव्यशकारं पठन्ति, केचित् ँकारशून्यं दन्त्यमेव सकारं पठन्ति। तत्र यजुर्विदां ँकारसहितो दन्त्यसकारः पठनीयः। यजुर्वेदीयत्वादस्य मन्त्रस्य दन्त्यसकारो(४)पदेशस्थैर्यादिति। ततोऽर्घोत्सर्गः। अत्रोत्सर्गवाक्ये प्रथमं युष्मत्पदोच्चारणम्। ततो देयद्रव्योच्चारणम्। 'असावेष तेऽर्घ' इति कात्यायनेनानुपूर्वीविशेषोपादा-

---

( १ ) 'कात्यायनैश्च' ना० क०। ( २ ) 'केचिन्न ददति' घ०।
( ३ ) कंसान्तर्गतं क०। ( ४ ) 'ऽपि परम्परो' क०।

नात्। तथा च 'एष वो हस्तार्घं' 'एष ते हस्तार्घं' इति वा वाक्यम्। ततः पित्राद्यर्घपात्राणां न्युब्जीकरणम्। तत्र प्रपितामहार्घपात्रस्थमवशिष्टजलादि पितामहार्घपात्रे कृत्वा तदपि पित्रर्घपात्रे कृत्वा 'ॐ पितृभ्यः स्थानमसि' इति एकदैव पात्रत्रयस्याधोमुखस्य वामप्रदेशेऽवस्थापनम् (१)। केचित् प्रथमं पितृपात्रं न्युब्जीकृत्य तदुपरि पितामहपात्रं तदुपरि प्रपितामहपात्रं न्युब्जीकुर्वन्ति। एतत्तु न मनोरमम्। "पितृभ्यः स्थानमसीति न्युब्जं पात्रं निदधाति" इति कात्यायनेन त्रयाणामेकदैव स्थापनाविधानात्। ततो गन्धादिदानम्। पात्रपक्षे प्रत्येकं तत्प्रतिपादनम्। ततो जलादिना चतुष्कोणमण्डलकरणम्। अत्र मण्डले द्विगुणोपक्रमनियमः प्रमाणाभावान्नास्ति। ततो जले आहुतिद्वयहोमः। तत्रान्ने(२) व्यञ्जनयोगो न कर्तव्यः। "उद्धृत्य घृताक्तमन्नं पृच्छत्यग्नौ करिष्ये" इति। अत्र घृताक्तान्नमात्रस्य विधानात्।

जुहुयाद्व्यञ्जनक्षारवर्जमन्नं ततो जले।

इति विष्णुपुराणीयवाक्यान्तरे निषेधाच्च। ततो भूस्वाम्यन्नदानम्। ततो हुतशेषप्रक्षेपः पात्रेषु। ततः प्रत्येकं परिवेषणम्।(३) (ततो मधुनाभिघारणम्) ततो 'मधुव्वाताऽऋतायते' इत्यादि ऋक्त्रयपाठः; 'मधुमधुमधु' इति च पाठः। अत्र

---

(१) पुराणे विशेषः-

आसिच्य प्रथमे पात्रे सर्वपात्रस्थसंस्रवान्।
ताभिरद्भिर्मुखं सिञ्चेद्यदि पुत्रमभीप्सति॥ इति।

(२) सस्यं क्षेत्रगतं प्राहुः, सतुषं धान्यमुच्यते।
आमान्नं वितुषं ज्ञेयं, पक्वमन्नमुदाहृतम्॥ इति।

(३) कंसान्तर्गतं क०।

बहूनां 'मधुमधुमधु' इति मन्त्रपाठस्यानाचरणम्। तत्रास्मन्मते—

अन्नं मधुमयं कृत्वा मधुव्वाताभिमंत्रितम्।

इति यमवाक्ये 'मधुव्वाता' इति पदस्य मधुप्रकाशकमन्त्रोपलक्षणपरत्वात् 'मधुनक्त' 'मधुमान्न' इति ऋग्द्वयोपस्थापकत्ववन्मधुमधुमध्वित्यस्याप्युपस्थापकत्वम्। मधुप्रकाशकत्वस्य तुल्यत्वात्। अतएव सुगतिसोपाने सवश्राद्धप्रयोगेऽन्नावसरे मधुमधुमध्विति च सर्वत्र लिखितम्। अत्रान्नोत्सर्गानन्तरं 'गायत्री' 'मधुव्वाता' इत्यादिजपस्ततः 'अन्नहीनपाठ' इति सुगतिसोपानादौ भवशर्मप्रतिहस्तकग्रन्थे क्रमः। अन्नोत्सर्गानन्तरम् 'अन्नहीनपाठः' ततो 'गायत्री' 'मधुव्वाता' इत्यादिपाठ इति पितृभक्त्यादौ क्रमः। तदनयोः क्रमयोर्विकल्प एव।

सव्याहृतिकां गायत्रीं, मधुव्वाता इति तृचम्।
जप्त्वा यथासुखं वाच्यं, भुञ्जीरंस्तेऽपि वाग्यता॥

इति याज्ञवल्क्यवाक्यानुसारेण सुगतिसोपानादिलिखनम्। कात्यायनसूत्रमन्त्रानुसारेण पितृभक्त्यादिलिखनम्। तथा च कात्यायनसूत्रम्—"वैष्णव्यर्चा यजुषा चान्नेऽङ्गुष्ठमवगाह्योष्णां स्विष्टमन्नं दद्याच्छक्त्या वाऽश्नत्सु जपेद्व्याहृतिपूर्वां सप्रणवां गायत्रीं मधुव्वाता इति ऋचम्" इति। अस्मत्संप्रदाये तु प्रेतश्राद्धेषु प्रतिहस्तकभवशर्मग्रन्थेन व्यवहारस्तदितरश्राद्धेषु पितृभक्तिलिखनानुसारेण व्यवहारः। अत्र 'इदमन्नम्' 'इमा आपः' 'इदमाज्यम्' इत्यन्नजलघृतेष्वङ्गुष्ठनियोजनमिति बहुषु नवीनग्रन्थेषु लिखितम्। 'इदमन्नम्' 'इमा आपः' 'इदमाज्यम्' इत्यन्नजलघृतेष्वङ्गुष्ठनियोजनानन्तरम् 'इदं हविः' इति पुनरन्नेऽङ्गुष्ठ-

1715

नियोजनमिति प्राचीनसंप्रदायः । तदनयोः पक्षयोः प्राचीनसंप्रदायः प्रामाणिकः । तथा हि कल्पतरौ श्राद्धकाण्डे पैठीनसिः—"इदं हविरित्येवं साङ्गुष्ठमन्न(१)विधिं ब्राह्मणेभ्यो दद्यात्" । अस्यायमर्थः—अन्नविधिरन्नप्रकारः पायसादिः स ब्राह्मणाङ्गुष्ठनिवेशनपूर्वकम् 'इदं हविः' इत्यभिधाय सङ्कल्पनीय इति लिखितम् । अत्रान्नोत्सर्गवाक्ये 'एतत्तेऽन्नं सोपकरणं स्वधा' इति क्रमः । एवमर्घपिण्डसूत्रदानेष्वपि प्रथमं 'ते' पदोच्चारणं ततो देयद्रव्यनामोच्चारणं कर्तव्यम् । कात्यायनादौ तथैव वाक्यश्रवणात् । प्रेतश्राद्धेषु ब्रह्मपुराणाद्यनुसारेण वाक्यम् । तत्र नायं नियमः । ततः पवित्रजपानन्तरमन्नविकिरणम् । तत्र मन्त्रद्वयम्—

अनग्निदग्धा ये जीवा ये प्रदग्धाः कुले मम ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥ इत्येकः ।
अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥ इत्यपरः

तत्र यजुर्वेदिनां नियमतः प्रथममन्त्रेणैवान्नविकिरणम् । कात्यायनेन तस्यैव गृहीतत्वात् । वेदशून्यानां द्वितीयमन्त्रः पौराणिकत्वात्प्रयोज्य इति । तत आचमनं ततो हरिस्मरणम् । ततो गायत्रीमधुव्वाताजपः । स च सव्येनापसव्येन वा प्रमाणाभावाच्छ्राद्धोपक्रमगायत्रीजपवत् । नच 'पूर्ववद्गायत्रीं जपित्वा' इति कात्यायनसूत्रे 'पूर्ववत्' इत्यतिदेशादपसव्यप्राप्तिरिति वाच्यम् । पूर्वमपसव्योपदेशाभावात् । तथा च तत्र 'पूर्ववत्' इत्यनेन पूर्वोक्तादि-

(१) 'विधं' इ० पा०

TIRUPATI.

ष्प्रणवव्याहृतिसाहित्यस्यातिदेशः। भवशमप्रतिहस्तकमतेऽत्र 'गायत्री मधुव्वाताजपो' नास्ति। ततः पिण्डस्थानेऽपसव्येन रेखाकरणमुल्मुकभ्रामणं छिन्नमूलकुशास्तरणं सव्येन 'देवताभ्यः पितृभ्यश्च' इति जपः। ततोऽपसव्येन पिण्डस्थानेऽवनेजनदानम्। ततः पिण्डोत्सर्गः। तत्रापि 'ते' पदस्य प्रथमं ततः 'पिण्डः स्वधा' इति वाक्यस्योच्चारणम्। ततः करप्रोञ्छनम्। तत आचमनम्। तत्र त्रिराचम्य' इत्यभिधानाच्चुलुकत्रयात्मकस्याचमनपदार्थस्य 'त्रिः' इत्यनेनान्वयात् चुलुकनवकतयाऽऽचमनत्रयं मन्यन्ते। वस्तुतस्त्वाचमनस्वरूपस्य चुलुकत्रयात्मकस्यैव स्वरूपेणोपादानमनुवादरूपत्वादिति भाति। ततः 'अत्र पितर' इत्याद्यनुष्ठानम्। ततः प्रत्यवनेजनम्। ततो नीवीस्रंसनम्। तत आचमनम् ततः सव्यहस्तेन सूत्रमादाय दक्षिणहस्तेन वामान्वारब्धेन पिण्डोपरि सूत्रधारणं "नमो वः०" इति पठित्वा 'ॐ एतद्वः पितरो वासः' इति प्रत्येकमविकृतेन मन्त्रेण। ततस्तदुत्सर्गः। ततस्तूष्णीं गन्धादिदानम्। ततोऽक्षय्योदकदानादि। अत्रापात्रके श्राद्धेऽक्षय्योदकदानादीनि केचिन्निवर्तयन्ति प्रतिवचनाभावाच्चन्न युक्तम्। एवं सति प्रथमं गायत्रीजपादेरपि निवृत्तिरापद्येत। ब्राह्मणानुज्ञाभावात्। तस्माद् ब्राह्मणाभावे ब्राह्मणकर्तृकाभ्यनुज्ञाप्रतिवचनादीनि निवर्तन्तां भोजनवत्। न तु यजमानकर्तृकजपादीनि निवर्तन्ते अन्नोत्सर्गादिवदिति। तत आशीःप्रार्थनम्। तत्र 'दातारो नाऽभिवर्द्धन्तां (१)वेदः सन्ततिरेव च'

---

(१) वस्तुतस्तु कात्यायनसूत्रे 'वेदा'' इत्येव पाठः। गदाधरादिभाष्येऽपि 'वेदावर्द्धन्ताम्' इत्येवमेव वचनव्यक्तिरुद्भावितासम्प्र-

इत्यत्र 'वेद' शब्दस्य प्रथमैकवचनान्तस्यास्मत्संप्रदाये पाठः । कात्यायनसूत्रे प्रथमैकवचनान्तस्यैव परम्परोपदेशात्, अग्निपुराणादौ तथा दर्शनाच्च । ततस्तूष्णीं पिण्डोपरि सपवित्रकुशाग्रयदानम् । तत 'ऊर्ज्जं वहन्तीः०' इति जलधारादानं, पिण्डोत्थापनमुल्मुकस्य छिन्नमूलानां चाग्नौ प्रक्षेपः । अर्घपात्रोत्तानीकरणं, दक्षिणादानं, 'देवताभ्यः०' इति जपः दीपनिर्वापणं, हस्तपादप्रक्षालनं, आचमनं, विष्णुस्मरणं, श्राद्धीयद्रव्यस्य ब्राह्मणे प्रतिपादनम् । एकोद्दिष्टे तु एकस्योद्देश्यतया एकवचनान्तप्रयोगेण वाक्यम् । 'ॐ अद्यामुकमासीयामुकातिथावमुकगोत्रस्य पितुरमुकशर्मणः सांवत्सरिकैकोद्दिष्टश्राद्धमहं करिष्ये' इति सङ्कल्पवाक्यम् । आश्विनकृष्णचतुर्दश्यां शस्त्रहतादीनामेकोद्दिष्टम् । शस्त्रादिहेतुकमरणयोगिनामाश्विनकृष्णचतुर्दशीश्राद्धाधिकरणं विधीयते । तथा च निमित्तानां तदधिकरणोपस्थितिमात्रेण चरितार्थत्वात्सङ्कल्पवाक्य निमित्तोल्लेखो विफल इति । 'ॐ अद्याश्विनकृष्णचतुर्दश्याममुकगोत्रस्य पितुरमुकशमण एकोद्दिष्टश्राद्धमहं करिष्ये' इत्येवमेव सङ्कल्पो युक्तः एवमशौचादिनाक्षयाहे सांवत्सरिकैकोद्दिष्टश्राद्धाकरणे अशौचान्ते या तिथिः प्राप्यते तस्यामेकोद्दिष्टश्राद्धं कर्तव्यम् ।

शुचिभूतेन दातव्यं या तिथिः प्रतिपद्यते ।
सा तिथिस्तत्र कर्तव्या न त्वन्या वै कदाचन ॥

इति वाक्येनाऽऽशौचावस्थायां प्राप्ता प्रथमातिथिः श्राद्धाधिकरणत्वेन बोध्यते । तत्रापि निमित्तोल्लेखोऽप्रयोजकः । (१)

---

दायपाठेऽप्यन्येषां बहुवचनान्त एवेत्यलमत्यर्थकदर्थनया ।
(१) कंसान्तर्गतं ना० क० ।

( प्राप्ततिथेरेवोल्लेखः प्रयोजकः। ) तथा च 'अद्यामुकमासीयामुकपक्षीयामुकतिथावमुकगोत्रस्य पितुरमुकशर्मणः सांवत्सरिकैकोद्दिष्टश्राद्धमहङ्करिष्ये' इत्येवं सङ्कल्पो न्याय्यः। प्रेतश्राद्धरूपैकोद्दिष्टे विशेषः। तत्र 'प्रेतत्वविमुक्तिहेतुकषोडशश्राद्धान्तर्गतैकादशाहश्राद्धमहं करिष्ये' इत्येवं सुगतिसोपाने वाक्यम्। तन्न युक्तम्। त्र्यहाशौचमासिकाशौचान्तद्वितीयदिने एकादशाहपदस्यानन्वयात्। नचाशौचान्तद्वितीयदिनश्राद्धस्य नामैवेदं पारिभाषिकम्। तथाऽविधानात्। नचैकादशाहपदस्याशौचान्तद्वितीयदिनोपलक्षकतयाशौचान्तद्वितीयदिनोपस्थापकमेवैकादशाहपदम्। मुख्यशब्दसंभवे पौरुषेयवाक्ये उपलक्षकशब्दप्रयोगस्यान्याय्यत्वात्। स्वायत्ते पदप्रयोगे किमित्यवाचकं पदं प्रयोक्ष्यामहे इत्यभिधानात्। नचागम एवैकादशाहपदेनाशौचान्तद्वितीयदिनश्राद्धमुपलक्षितमिति तत्पदप्रयोगेऽस्य स्वायत्तत्वाभाव इति वाच्यम्। तेन प्रकारेण स्मृतिष्वश्रवणात्। तस्मात् 'प्रेतत्वविमुक्तिहेतुकषोडशश्राद्धान्तर्गताद्यश्राद्धमहं करिष्ये' इति सङ्कल्पो युक्तः। तथाहि—

द्वादशप्रतिमास्यानि आद्यं षाण्मासिकं तथा।
सपिण्डीकरणं चेति प्रेतश्राद्धानि षोडश ॥

इति वाक्ये षोडशश्राद्धानामाद्यादिनामकथनम्। ततश्च तेषु मध्ये किं कुत्र विधातव्यम्? इत्यपेक्षायाम् 'आद्यमेकादशेऽहनि' इत्यशौचान्तद्वितीयदिनमाद्यश्राद्धाधिकरणत्वेन विदधाति। तथा चाद्यपदेनैव सङ्कल्पः कर्तव्यः। सर्वाशौचान्तद्वितीयदिने मुख्यशब्दोपस्थितत्वेनाद्यपदस्य योग्यत्वात् षोडशश्राद्धगणनायामा-

घशब्देन कीर्तनान्मूलवाक्योल्लिखितप्रकारेणैव कीर्तनं लौकिक-वाक्येऽपि युज्यते अन्यथाऽपरिच्छेदकतत्तदर्थोपस्थापकशब्दपरि-ग्रहे सर्वत्रागमप्रतिपादितार्थोपस्थितावनियमप्रसङ्गः । नन्वेवमून-षाण्मासिकोनवार्षिकपदेन सङ्कल्पवाक्ये षाण्मासिकद्वयकीर्त्तनं न सङ्गच्छते । मूलवाक्ये षाण्मासिकपदेनोत्कीर्तनात्तत्पदोत्कीर्त्तन-स्यैव युक्तत्वादिति चेन्न । षाण्मासिके तथेति संक्षेपण तयोरेवा-भिधानाददृष्टशब्देन धर्माधर्माभिधानवत् । तथा च मुख्यशब्द-त्वादूनषाण्मासिकोनवार्षिकपदेनोत्कीर्तनमपि सङ्गतम् । अनेनैवा-शयेनैतयोरेवोनषाण्मासिकोनवार्षिकत्वेन प्रसिद्धिरिति विवरणं कृतं पितृभक्तौ श्रीदत्तोपाध्यायैः । अत एव 'द्वादशप्रतिमास्यानि' इति मूलवाक्येन प्रथममासिकादीनामेवाभिधानात्प्रथममासिका-दिपदेनैव सङ्कल्पः सर्वेषां निर्विवादः । प्रथममासिकादिप्रयो-गवाक्यं निर्विवादम् । सपिण्डीकरणेऽपि वाक्ये विवादाभावः । अर्घजलसंयोजने, पिण्डसंयोजने च विवादः । तत्र केचिद्विभागे संयोजने च मंत्रान्वयं कुर्वन्ति, केचित्संयोजने मंत्रान्वयं कुर्वन्ति, (१)( केचिद्विभागमात्रे )। तत्रोभयत्र मंत्रान्वयः क्रियते इति युक्तः पक्षः । तथाहि—"प्रेतपात्रं पितृपात्रेष्वासिञ्चति ये समाना इति द्वाभ्याम् । एतेनैव पिण्डो व्याख्यातः" इति कात्यायनसू-त्रेण संयोजने मन्त्रान्वयो बोध्यते ।

निरूप्य चतुरः पिण्डाञ्छ्राद्धदः प्रतिनामतः ।
ये समाना इति द्वाभ्यामाद्यं तु विभजेत्त्रिधा ॥
एष एव विधिः पूर्वमर्घपात्रचतुष्टये ।

---

( १ ) कंसान्तर्गतं क० ।

इति वाक्येन विभागे मन्त्रान्वयो बोध्यते। अत उभयत्र मन्त्रान्वयः प्रामाणिकः। नच कात्यायनसूत्रश्रुतसंयोजनमात्रान्वयबलेन 'विभजेत्' इत्यस्य मुख्यार्थत्यागो युक्तः। निरपेक्षश्रुतवाक्ययोस्तुल्यबलतया बाध्यबाधकभावाभावेन भिन्नविषयतायां विरोधाभावेनैकस्यापरवाक्यस्थपदस्य मुख्यार्थत्याजनेऽसामर्थ्यात्। अन्यथा 'निरूप्य' इति वाक्यश्रुतविभागान्वयबलेन कात्यायनसूत्रश्रुतासेचनपदस्यैवार्थान्तरकल्पना किं न स्यात्। विनिगमनाविरहात्। प्रत्युत एकस्य द्रव्यस्य द्रव्यत्रयेण क्रमेण समं संयोजने विभागस्यावश्यकत्वाद्विभागप्राप्तौ तत्रापि मन्त्रापेक्षायामुपस्थितमन्त्रान्वयस्य योग्यत्वाद्विभागे मन्त्रान्वयो युक्तः। तत्र चैकविनियोगे युक्तत्वान्मन्त्रयोरादावेव प्रणवोच्चारणं न मध्येऽपीति। अत्राक्षय्योदकदानवाक्ये श्राद्धविशेषणत्वेनोपात्तानां (षष्ठ्यन्तानां) पदानां दानोद्देश्यभूताभिधायिनां च षष्ठ्यन्तानां पदानां प्रयोगे पौर्वापर्येऽनियमो दृश्यते। तत्रोभयत्राप्यन्वयप्रतीतिरेव कल्प्या। फलतोऽविशेषात्। एवं दक्षिणादानवाक्ये आभ्युदयिकश्राद्धसङ्कल्पवाक्येऽपि न विवादः।

नान्दीमुखे विवाहे च प्रपितामहपूर्वकम्।
वाक्यमुच्चारयेत्प्राज्ञोऽप्यन्यत्र पितृपूर्वकम्॥

इति यद्यप्यस्ति प्रपितामहानुपूर्वीवाक्यकरणे प्रमाणं तथाप्युपदेशानुरोधात्पितृपूर्वकमेव वाक्यं प्रयुज्यते। तत्रोपदेश एव बहुप्रामाणिकानुमतः शरणम्। वस्तुतः 'प्रपितामहपूर्वकं' वाक्यं युक्तम्। अत्र पित्राद्यर्घपात्रेषु यवप्रक्षेपे विवादः। तत्र तिलप्रक्षेपमन्त्रातिदेशेन यवादिपदप्रक्षेपेण पाठ इत्यभिमानो बीजम्।

वस्तुतोऽतिदेशो न प्रमाणम् । हलायुधनिबन्धे मुख्यत एवमेवास्य मन्त्रस्योपदेशादिति । तत्र—

यवोऽसि सोमदैवत्यो गोसवो देवनिर्मितः ।

प्रत्नमद्भिः पृक्तः पुष्ट्या नांदीमुखाँल्लोकान्प्रीणाहि नः स्वाहा ॥

इत्यस्मत्संप्रदाये पाठः । स च हलायुधनिबन्धे तथैव मंत्रस्य लिखनादुपदेशस्य परम्पराप्राप्तत्वेन स्थैर्याच्च तथैव युक्तः । प्राचीनपितृभक्तिश्राद्धकल्पादिग्रन्थेषु तथैव लिखनाच्च । केषुचिद्ग्रन्थेष्वग्रे योजयित्वा 'नान्दीमुखान्पितृँल्लोकान्प्रीणाहि नः स्वाहा' इति 'पितन्' इति पदमधिकं दत्तमस्ति । तदधिकमेवेति । अत्र भूस्वाम्यन्नदानेऽपि दैवविधिं कुर्वन्ति । तन्न युक्तम् । तस्याभ्युदयिकश्राद्धबहिर्भूतत्वेन दैवविधौ प्रमाणाभावात् । तथा च पित्र्यविधिनैव युक्तमिति । अत्र 'नान्दीमुखाः पितरः प्रीयन्ताम्' इत्यक्षय्यस्थाने इति कात्यायनसूत्रम् । तत्रान्यत्र कथितषष्ठ्यन्तपदवारणार्थमक्षय्यपदवारणार्थं च प्रथमान्तपदेन निर्देशः 'पितरः प्रीयन्ताम्' इति चोक्तम् । एतदेव वाक्यमत्रप्रयोक्तव्यमिति केचित् । अस्मत्संप्रदाये तु श्राद्धान्तरवत्प्रत्येकोद्देश्यतायां बाधकाभावात् । वाक्यस्य षष्ठ्यन्तपदाक्षय्यपदप्रयोगनिवारणार्थत्वेन चरितार्थत्वात् । 'अमुकगोत्रा मातामुकदेवी नान्दीमुखी आभ्युदयिकश्राद्धे दत्तैतदन्नपानादिभिः प्रीयताम्' इति वाक्यं प्रयुज्यते । अत्र वैदिकमन्त्रेष्वपि 'नान्दीमुखपदं' योजयित्वा पठन्ति । अत्र नान्दीमुखाः पितरो मादयध्वम् 'नमो वो नांदीमुखाः पितरो रसाय' इत्यादिक्रमेण । तन्न युक्तम् । मन्त्रेऽपि तद्योजनस्याप्रामाणिकत्वात् । लौकिकवाक्येष्वेव 'नान्दीमुखा-

न्पितॄनहमावाहयिष्ये' इत्यादिना प्रकारेण प्रति पदं सूत्रे नान्दीमुखपदयोजनात् । नित्यश्राद्धेऽपि गोत्रसम्बन्धिपदानामुच्चारणपूर्वकमेव वाक्यम् । पितृभक्तावपि तथैव लिखितम् । अत्र केचिद्दक्षिणादानं न कुर्वन्ति । तन्न युक्तम् । 'हतं यज्ञमदक्षिणम्' इति वाक्येन दक्षिणाया आवश्यकत्वेन बोधनात् । यज्ञपदेन तत्र श्राद्धस्याभिधानात् । नच—

नित्यश्राद्धमदैवं स्याद्दक्षिणापिण्डवर्जितम् ।

इतिवाक्येन विशेषतो दक्षिणानिषेधः । अकरणेऽनिष्टश्रवणस्यान्यथा (१) ( व्यव ) स्थापयितुमशक्यत्वात् । 'दक्षिणापिण्डवर्जितम्' इति वाक्येऽन्वयस्यान्यथाप्युपपत्तेः । सामान्यतः प्राप्तदक्षिणाविधेरबाधकत्वात् । तथाहि । श्राद्धपल्लवे व्याख्यातम्—

नित्यश्राद्धमदैवं स्यादर्घपिण्डविवर्जितम् ।

'च दक्षिणा देया' इत्याक्षिप्यते । तेन तत्र नित्यश्राद्धे दक्षिणा देयेत्यर्थ' इति । एवं स्कन्दपुराणादिवाक्येऽपीदृशमन्यथायोजनं सुकरम् । दक्षिणाबोधकवाक्यमन्यथासिद्धमिति । अत एव पितृभक्तावपात्रकनित्यश्राद्धप्रयोगलिखनेऽपि 'ततो यथाशक्ति दक्षिणां दद्यात्' इति सिद्धवद्दक्षिणादानं लिखितम् ।

नित्यश्राद्धमदैवं स्यादर्घपिण्डविवर्जितम् ।

इति वाक्यं लिखितम् । तेन दक्षिणानिषेधशङ्कापि नावतारिता । नित्यश्राद्धाभिधायकं वाक्यमवतीर्य तत्र चार्घपिण्डावाहनविश्वेदेवश्राद्धानि निषिद्धानि । पूर्वदिननियमश्राद्धदिननिय-

---

( १ ) कंसान्तर्गतं ना० क० ।

माग्नौकरणश्राद्धोत्तरकर्मज्ञातिभोजनान्याचारान्निवर्तन्ते इति च निषिद्धपरिगणने दक्षिणा न गणिता पितृभक्तौ। स्मृतिसारादावपि दक्षिणादानं कर्त्तव्यमिति लिखितम्। अतो मीमांसकानामप्यपात्रकेऽपि नित्यश्राद्धे दक्षिणादानस्य प्रतिपत्त्यानिर्विकल्पं दक्षिणादानम्। तीर्थश्राद्धे तु विशेषः—

आमान्नेनैव कर्तव्यमर्घावाहनवर्जितम्। इति।

तथा च देवीपुराणे—

तीर्थेषु ब्राह्मणान्नैव परीक्षेत कदाचन।
अन्नार्थिनमनुप्राप्तं भोज्यं तं मनुरब्रवीत्॥
सक्तुभिः पिण्डदानं च संयावैः पायसेन वा।
कर्तव्यमृषिभिर्दिष्टं पिण्याकेन गुडेन वा॥
देयं तु तिलपिण्याकं (१)शक्तिमद्भिर्नरैः सदा।
श्राद्धं तु तत्र कर्तव्यमर्घावाहनवर्जितम्॥
श्वध्वाङ्क्षगृध्रकाकानां नैव दृष्टिहतं च यत्।
श्राद्धं तत्तैर्थिकं (२)ज्ञेयं पितॄणां तृप्तिकारकम्॥
अकालेऽप्यथवा काले तीर्थश्राद्धं तथा नरैः।
प्राप्तैरेव सदा कार्यं कर्तव्यं पितृतर्पणम्॥
पिण्डदानं ततः शस्तं पितॄणां चातिवल्लभम्।
विलम्बो नातिकर्तव्यो नच विघ्नं समाचरेत्॥

संयावो–घृतगोक्षीरगोधूमादिसाधितो भोज्यविशेषः। पिण्याकः–तिलखलिः। पुनस्तिलपिण्याकपदं तिलमात्रविधायकमिति पितृभक्तिः। अकाले विहितामावास्यादिव्यतिरिक्तेऽपि न

(१) 'भक्ति' क०। (२) 'श्रेयः' क०।

दिकमप्यामान्नेनैव कर्तव्यम् । यदाह जाबालिः—

आमश्राद्धपदोऽनग्निः सर्वत्रैवं मनीषिणः ।
येनाग्नौकरणं कुर्यात्पिण्डांस्तेनैव निर्वपेत् ॥ इति ।

अत्राप्यनग्निः पाकयोग्याग्निरहित इत्यर्थः । काम्यं श्राद्धमामान्नेन न कर्तव्यम् । तथाह लघुहारीतः—

श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्तितम् ।
अमावास्यादिनियतं माससंवत्सरादृते ॥ इति ।

अत्र नियतमावश्यकमित्यर्थः । तेनावश्यकेऽमावास्यादिश्राद्धेऽग्न्याद्यभावे आमान्नविधिर्न काम्ये । आवश्यकेऽपि मासिकसांवत्सरिकादावेकोद्दिष्टे नामान्नविधिः । 'माससंवत्सरादृते' इतिवचनात् ।

एकोद्दिष्टं तु कर्त्तव्यं पाकेनैव सदा स्वयम् ।

इति सिद्धान्नस्यैव वाक्यान्तरेणापि नियमतो विधानात् । पाकासम्पत्तौ च स एवाह—

अभावे पाकपात्राणां तदहः समुपोषणम् । इति ।

शूद्रेण सर्वं श्राद्धमामान्नेनैव कर्तव्यम्, 'शूद्रेण तु सदैवहि' इति वाक्यात् । आमश्राद्धे मांसादिव्यञ्जनान्यामान्येव देयानीति श्राद्धपल्लवः । भुजबलभीमे--

अपत्नीकः प्रवासी च यस्य भार्या रजस्वला ।
आमश्राद्धं द्विजैः कार्यं शूद्रेण तु सदैव हि ॥ इति ।

अथ दम्पतिपूजनविवेचनम् । तत्र—

संपूज्य द्विजदाम्पत्यं नानाभरणभूषणैः ।
वृषोत्सर्गं च कुर्वीत देया च कपिला शुभा ॥ इति वाक्यम् ।

तु निषिद्धेऽपि । निषेधविधानविरोधात् । नच निषेध एतदति-रिक्तविषयः । सामान्ये बाधकाभावात् । न चैतदेव वाक्यं बाध-कम् । एतस्यान्यार्थोपपादनादित्येवमेव पितृभक्तिः । पिण्डदा-नमुखेन प्रधानश्राद्धविधानमेव तत्तद्द्रव्यकं ज्ञेयम् । 'श्राद्धं तु तत्र कर्तव्यम्' इति स्वयमेवाभिधानात् । 'पिण्डदानं ततः शस्तम्' इति तीर्थे केवलपिण्डदानमपि कर्त्तव्यमिति बोधितम् । 'प्राप्तैरेव सदा कार्यम्' इत्यनेन 'विलम्बो नातिकर्तव्यः' इत्य-नेन च तीर्थप्राप्तौ तथा कर्तव्यम् । यथा तीर्थप्राप्त्यनन्तरं रात्र्या-दिनिषिद्धकालान्तरसंयोगो न भवति । किन्तु तीर्थप्राप्त्यनन्तरं तीर्थश्राद्धक्रियानुगुणस्नानसन्ध्यातर्पणदेवपूजाऽनन्तरमेव श्राद्ध-क्रिया क्रियते इति बोध्यते । तदनुगुणातिरिक्तस्वाध्यायाचर-णेन विलम्बसम्भवात् । अतो दिनान्तरे तीर्थप्रवेशं रात्र्यादौ कृत्वा दिनान्तरे श्राद्धं क्रियत इत्ययुक्तम् । तदिदं तीर्थश्राद्ध-मामान्नेनैव कर्तव्यम्—

आपद्यनग्नौ तीर्थे च चन्द्रसूर्यग्रहे तथा ।
आमश्राद्धं द्विजैः कार्यं शूद्रेण तु सदैव हि ।

इति वाक्येन द्विजानामपि तीर्थे आमान्नैः श्राद्धविधानात् । अत्र 'आपदि' इत्यनेन आत्मनो देशकालादीनां चोपप्लवाव-स्था कथिता । तेन स्वाशक्तौ देशकालोपप्लवे पाकक्रियया श्राद्धासम्भावनायामामश्राद्धं कर्तव्यमित्यर्थः । 'अनग्नौ' इति पाकयोग्याग्निरहित इत्यर्थः । न त्वनग्नौ श्रौतस्मार्त्ताग्निरहित इत्यर्थः । अनग्निमतामपि ब्राह्मणानां सांवत्सरिकादौ सिद्धान्न-श्राद्धाचरणस्य सर्वप्रामाणिकसम्मतत्वात् । आमश्राद्धे पिण्डा-

अत्र 'नानाभरणभूषणैः' इति भूषणपदं क्रियापरमिति न पुनरुक्तिः। अत्र 'संपूज्य' इति 'क्त्वा' श्रवणाद्वृषोत्सर्गाङ्गं दम्पतिपूजनमित्याहुः। तन्न। विनिगमनाभावेनोभयस्यापि प्रधानत्वात्। समानकर्तृकताबोधनमात्रेण 'क्त्वा' श्रुतेरुपपत्तेरिति। दम्पतिपूजनस्य प्रधानत्वाद्वृषोत्सर्गाकरणेऽपि दम्पतिपूजनं युक्तम्। अथ वृषोत्सर्गविवेचनम्। तत्र वृषस्तरुणो (१) वत्सतर्यश्च त्रिहायन्यः।

चरणानि मुखं पुच्छं यस्य श्वेतानि गोपतेः।
लाक्षारससवर्णश्च तं नील इति निर्दिशेत्॥

एवंविधवृषाभावेऽन्यो वृषो यो यस्योपादेयस्तमाह—

वर्णतस्ताम्रकपिलो ब्राह्मणस्य प्रशस्यते।
स्निग्धरक्तेन वर्णेन क्षत्रियस्य प्रशस्यते॥

---

(१) वत्सतरीसंख्यायां विशेष आदित्यपुराणे—
अष्टौ वाथ चतस्रो वा यथालाभमथापि वा। इति।
यथालाभं द्वे एकावेति।

तथा च देवीपुराणे—
चतस्रो वत्सिका भद्रे द्वे वा सम्भवतोऽपि वा।
वत्सः सर्वाङ्गसम्पूर्णः कन्यका वत्सिका भवेत्॥ एकेत्यर्थः।
विवाहस्त्वेकवत्सर्या नीलेन भविता सदा। इति।

एका वत्सतरी-एक वर्षा। तथा च तत्रैव-
त्रिहायनीभिर्धन्याभिः सुरूपाभिश्च शोभितः। इति।

एवं यदैका वत्सतरी तदा एकवर्षा। यदा द्वे बह्व्यो वा तदा त्रिहायन्य इति विवेकः। ताश्चागुर्विण्यः।

विसर्ज्याश्चाप्यगुर्विण्यो देया गावो वृषस्य च।

इति सौरपुराणोक्तेः।

काञ्चनाभेन वैश्यस्य कृष्णेनाप्यन्त्यजन्मनः ।

अत्र वृषोत्सर्गस्य वैदिकबहुमन्त्रसाध्यतया वेदोच्चारणानधिकृतस्य शूद्रस्य वृषोत्सर्गानधिकारप्राप्तौ 'कृष्णेनाप्यन्त्यजन्मन' इति शूद्रं प्रति वृषविशेषोपदेशेन वेदोच्चारणेऽधिकारबोधनाद्वृषोत्सर्गाधिकारो बोध्यते । वेदोच्चारणेन विना तत्करणकवृषोत्सर्गानधिकारे वृषविशेषकथनानर्थक्यापत्तेः । तस्माद्वृषविशेषोपदेशान्यथानुपपत्त्या शूद्रस्यापि वृषोत्सर्गेऽधिकारः कथ्यते । तत्रापि 'एतयैवोत्सृजेरन्' इति वृषोत्सर्गे वैदिकवाक्यकरणत्वनियमविधानात्तेन विनोत्सर्गस्यानुपपत्तेरन्यथानुपपत्त्यापि शूद्रस्य वृषोत्सर्गवाक्य एव वेदपाठो नान्यत्रेति सर्वप्रामाणिकसिद्धम् । शूद्रतुल्यन्यायतया मन्त्ररहितायाः स्त्रिया अपि वृषोत्सर्गेऽधिकार इति केचित् । तन्न, शूद्रवत्स्त्रिया अप्यधिकारबोधने प्रमाणाभावात् । न हि तस्या अधिकारबोधनं विना कस्यचिद्वाक्यस्यानुपपत्तिः । सामान्यविधेर्विशेषवचनेनैव बाधः । बाधकस्य चानुपपत्तिमूलकत्वात् । यावत्यबाधितेऽनुपपत्तिप्रशमनं न भवति तावदेव बाध्यते । न चात्र सामान्यविधिप्रवृत्तौ काचिदनुपपत्तिरिति न तस्या अधिकारः । एवमनुपनीतस्य त्रैवर्णिकस्य वेदशून्यतया वृषोत्सर्गे नाधिकारः । वृषोत्सर्गकालश्च आशौचान्तद्वितीयादिनं कार्तिकी चैत्री रेवतीयुताश्विनपूर्णिमा च । तत्र कार्तिक्यां वृषोत्सर्गात्पूर्वमपूपदानमधिकम् । अशौचान्तद्वितीयादिने वृषोत्सर्गे आभ्युदयिकश्राद्धाभावः । सपिण्डनानन्तरमाभ्युदयिकेऽधिकारात् । अत्र 'अशनाय स्वाहा'इत्यकारान्ताशनशब्द(१)(प्रकृतिक)स्य चतुर्थ्यन्तस्य

(१) कंसान्तर्गतं ना० क० ।

सुगतिसोपाने लिखनम् । 'अशनये स्वाहा' इतीकारान्ताशनि-शब्द(१)(प्रकृतिकस्य चतुर्थ्यन्तस्य) पाठः प्रमाणसिद्धः । तथाहि—"अथ वृषोत्सर्गो गोयज्ञेन व्याख्यातः" इति पारस्करसूत्रे पूर्वोपदिष्टस्य गोयज्ञधर्मस्यातिदेशात् । अग्निरुद्रशर्वपशुपत्युग्राशनिभवमहादेवेशानानां देवतानां पायसाहुतावुपस्थितिः । तत्र चाशनिशब्द इकारान्त उपदिष्टः । तत्रापि यजुर्वेदीयमाध्यन्दिनीयशाखा प्रमाणम् । तत्राह ऊनचत्वारिंशेऽध्याये—

अग्निऽ हृदयेनाशनिँ हृदयाग्रेण पशुपतिं कृत्स्नहृदयेन भवं यक्ना ।

शर्वम्मतस्नाभ्यामीशानम्मन्युना महादेवमन्तः पर्शव्येनोग्रन्देवं वनिष्ठुना वसिष्ठहनुः शिङ्गीनि कोश्याभ्याम् ।

इति कण्डिकायामग्न्यादिदेवतानां गोयज्ञे उपदेशः । तस्यां कण्डिकायां 'अशनि'शब्दस्येकारान्तस्योपादानम् । एतत्कण्डिकापाठः शतपथे, 'तस्मादशनिरासि'इति नामनिरुक्तिश्च । पारस्करगृह्यसूत्रपद्धतिषु (२) 'अशनाय स्वाहा' इति प्रयोगोऽप्यप्रमाणम् । अशनशब्दस्य कुत्राप्युपदेशसम्भावनायामपि एवम् । एवम् 'अशनि'शब्दस्य प्रामाणिकत्वप्रमितौ वृषोत्सर्गाहुतिष्वशनेरेव देवत्वं नाशनशब्दस्येति स्थितम् । पिष्टकाहुतिमन्त्रेऽपि पाठद्वैतम् । तद्विवेचनार्थमर्थः पदानि च विविच्यन्ते । तत्र 'पूषा गा अन्वेतु नः' इत्यादिको मन्त्रः । तत्र प्रथममादित्यविशेषवाचकः 'पूषन्'शब्दः प्रथमैकवचनान्त उपात्तः । ततो 'गो'

---

(१) कंसान्तर्गतं ना० क० ।

(२) 'अशनये स्वाहा' इति प्रयोगश्च प्रमाणम् ग० ।

शब्दः पशुवाचको द्वितीयाबहुवचनान्त उपात्तः । तत इण् गतावनुपूर्वो लोट्प्रथमपुरुषैकवचनान्तः। ततः षष्ठीबहुवचनान्तस्याऽस्मच्छब्दस्य नसादेशे रूपं 'न' इति। पुनः 'पूषन्'शब्दस्य तादृशस्यैवोपादानम् । ततो 'रक्ष पालने' इत्यस्य लोट्प्रथमपुरुषैकवचनान्तस्य प्रयोगः। तत 'अर्वन्'शब्दस्य (२)(अश्ववाचकस्य) "अर्वणस्त्रसावनञः" इति सूत्रेण त्रादेश कृते 'अर्वत' इति द्वितीयाबहुवचनान्तः। ततः 'पूषन्'शब्दस्य तादृशस्यैवोपादानम् । ततो वकारादेः 'वाज' शब्दस्यान्नवाचिनो द्वितीयैकवचनान्तस्य रूपम् । तस्य च मोऽनुस्वारे कृते यजुष्ट्वात्सकारे परेऽनुस्वारोच्चारणम् । ततः 'षणु दाने' इत्यस्यानुबन्धलोपे सत्वनत्वयोः कृतयोस्तनादित्वादुप्रत्यये गुणे च लोट्प्रथमपुरुषैकवचनान्तस्य रूपं 'सनोतु' इति । ततोऽस्मच्छब्दस्य चतुर्थीबहुवचनान्तस्य रूपं 'न' इति । तदयमर्थः—पूषा देवता नोऽस्माकं गाः पशून् अन्वेतु अनुगच्छतु प्रतिपालयत्विति यावत् । पूषा अर्वतोऽश्वान् रक्षतु पातु। पूषा वाजमन्नं नोऽस्मभ्यं सनोतु ददातु । एवम्—

पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः पूषा वाजꣳ सनोतु नः स्वाहा।

इति व्यवस्थितो मन्त्रः । अत्र वृषभाङ्कनेऽपि विवादः । स च सुगतिसोपानेनैव निर्णीतः । 'दक्षिणपार्श्वे चक्रेण तत्सजातीयवामपार्श्वे शूलेन च' इति लिखनाद्दक्षिणपार्श्वस्य सजातीयं दक्षिणपार्श्वमेव पश्चाद्भागरूपम् । तस्य वामपार्श्वे इति

(२) कंसान्तर्गतं ना० क० ख० ग० ॥

पश्चाद्भागीयवामपादोपरिभाग एवायाति । पुरोभागवामपार्श्व-विवक्षायां 'तद्वामपार्श्वे' इत्येवं ब्रूयात् न 'तत्सजातीय' इति पदमुपादेयादिति । "हिरण्यवर्णा" इत्यादिष्वपि वर्णविवेचनार्थः प्रदर्श्यते । 'हिरण्यवर्णा' इति शुद्धोपलक्षणम् । हिरण्यवर्णाः शुद्धवर्णाः शुचयः पवित्राः पावकाः पावयित्र्यः । 'पूञ्' पवने इत्येतस्य ण्वुलि अकादेशे टापि "पावकादीनां छन्दस्युस्युपसंख्यानम्" इत्यकारस्येत्वप्रतिषेधे रूपम् । यासु अप्सु जात उत्पन्नः कश्यपऋषिः । यासु अप्सु इन्द्रो मघवा । या आप अग्निं वैश्वानरं गर्भं भ्रूणं दधिरे धृतवत्यः । 'डुधाञ्' इत्यस्य लिड्यात्मनेपदे प्रथमपुरुषबहुवचने रूपम् । सुवर्णाः शोभनवर्णास्ता अपिः नोऽस्माकं शꣳ स्योनाः कल्याणप्रदाः भवन्तु । यासामपां राजा ईश्वरः वरुणः प्रचेताः याति गच्छति मध्येऽन्तरा सत्यानृते तथ्यातथ्ये अवपश्यन् अवलोकयन् जनानां लोकानाम् । द्वितीयार्द्धं पूर्ववत् । यासामपां देवास्त्रिदशाः दिवि स्वर्गे कृण्वन्ति कुर्वन्ति । कृविर्हिंसाकरणयोश्चेत्यस्य रूपम् । भक्ष्यमदनीयम् । या आपः अन्तरिक्षे आकाशे बहुधा बहुभिः प्रकारैर्भवन्ति सम्पद्यन्ते । द्वितीयार्द्धं पूर्ववत् । शिवेन कल्याणेन मा मां चक्षुषा नेत्रेण पश्यत अवलोकयत । आप इति सम्बोधनम् । शिवया कल्याण्या तन्वा मूर्त्या उपस्पृशत आमृशत । उपस्पृशतेति 'स्पृश्' स्पर्शने इत्यस्योपपूर्वस्य लोट्मध्यमपुरुषबहुवचने रूपम् । त्वचं सहजं शरीरावरणं मे मम घृतश्चुतः सर्पिश्चुतः घृतं श्चोतन्तीति 'श्च्युतिर्' क्षरणे 'श्चुतिर्' इत्येके । अग्रिमधातोर्यकारशून्यस्य क्विपि प्रथमाबहुवचने रूपम् । शुचयः या

आपः पावकाः पावयित्र्यः ता न इत्यादि पूर्ववत् । "शन्नो-देवीः" इति मन्त्रो निर्विवादः । वृषभाभिमन्त्रणमन्त्रोऽव्याख्या-यते 'पिता वत्सानाम्' इत्यादिः । पिता जनकः वत्सानां तर्ण-कानां पतिः स्वामी अघ्न्यानां गवाम् । "अर्जुन्यघ्न्या रोहिणी' इत्यमरः । अथो इत्योकारान्तो निपातः समुच्चये । पिता जनकः महतां बृहतां गर्गराणां तरुणपशूनाम् । गर्गराणामिति 'गॄ' निगरणे इत्यस्य पचाद्यचि "उणादयो बहुलम्" इति बहुलवच-नाद्द्विर्वचनमभ्यासे रुगागमः । 'गर्गर' इत्यस्य षष्ठीबहुवचने रूपम् । वत्सस्तर्णकः प्रथमान्तः । सांहितिक उकारः । जरायु-र्गर्भवेष्टनश्चर्मपुटस्तस्मान्नपुंसकप्रथमैकवचनम् । प्रतिधुक् 'दुह' प्रपूरणे प्रतिपूर्वस्तस्मात्क्विपि प्रथमैकवचने तल्लोपे घत्वे भष्भावे चर्त्वे च रूपम् । पीयूष इति पेयूषोऽभिनवं पयः । तस्य छान्द-सत्वादेकारस्येत्वं पीयूषः । यद्वा पीयूषमिवामृतमिव पीयूषस्त-स्मात्प्रथमैकवचने सोर्यत्वयलोपौ । आमिक्षा क्षीरसारः । क्षू संयोगेऽयं टाबन्तः । घृतं सर्पिः । तदिति तच्छब्दान्नपुंसक-प्रथमैकवचनम् । तदनन्तरमुशब्दो निपातः समुच्चयवाची । तत इदं शब्दस्य षष्ठ्यां रूपम् । तस्मिन्परत उशब्दस्य यणादेशे तद्वस्य इति । रेतः तेजः । रेत इति सकारन्तस्य रेतश्शब्दस्य वीर्यवाचकस्य नपुंसके प्रथमैकवचने रूपम् । वत्सादीनि यस्य रेतस्तेजः परंपरया तत्कारणत्वादित्यर्थः । तथा च मन्त्रः—

पिता वत्सानां पतिरघ्न्यानामथो पिता महतां गर्गराणां वत्सो जरायुप्रतिधुक्पीयूष आमिक्षा घृतं तद्वस्य रतः ।

वृषोत्सर्जनमन्त्रो व्याख्यायते—"एनं युवानम्" इत्यादिना ।

एतच्छब्देन द्वितीयैकवचनान्तेनोपस्थितं वृषं निर्दिशति । एन-मुपस्थितं वृषपतिं स्वामिनं वो युष्माकं कृते उपस्थिता वत्सतरी-र्लक्षीकृत्य निर्दिशति व इति ददानि त्यजानि । तथा चायमर्थः हे वत्सतर्यो ! वो युष्माकं कृते एनं वृषं ददानि त्यजानि । ददानीति 'डुदाञ्' दाने इत्यस्य लोडुत्तमपुरुषैकवचने रूपम् । एतावता युष्माकमर्थेऽयं वृषो मयोत्सृष्टः स्वस्वत्वध्वंसविषयः कृत इत्युक्तं भवति । तदुद्देश्यकत्वेन त्यागे तासां प्रयोजनमाह— तेन वृषेण प्रियेण पत्या सह क्रीडन्तीः खेलन्त्यः चरथ भ्रमथ । तेन प्रियेणेति च 'सह' शब्दयोगे तृतीया । 'क्रीडन्तीः' इति छा-छन्दसो जसि पूर्वसवर्णः । वत्सतरीत्यागमप्याह—'मान' इति 'व'इति पूर्वार्द्धस्थितमिहान्वीयते । तस्य विभक्तिपरिणामेन प्रथ-मान्तस्यात्रान्वयः । तेनायमर्थः—हे वत्सतर्यो ! यूयमपि नोऽस्मा-कम् । नो मा शब्दो निषेधार्थः । नास्मत्स्वत्वविषयाः । युष्मा-स्वपि स्वत्वं मया न कृतमिति यावत् । एतावता वत्सतरीणा-मप्युत्सर्गः प्रतिपादितः । उत्सृष्टः फलमाह—साप्त्यजनुषा सुभगा रायस्पोषेण समिषामदेमेति । अर्थाद्वयं रायो धनस्य पोषेण पुष्ट्या समृद्ध्या सम्मदेम हृष्टा भवेम । व्यवहितस्यापि 'सं' शब्दस्य 'व्यवहिताश्च' इति छन्दसि प्रयोगः । 'मदेम' इति व्यत्ययेन श्यनोभावे शपि रूपम् । 'मदी' हर्षे इत्यस्य लिङुत्तम-पुरुषबहुवचने इषा संमदेम अन्नेन च सम्मदेमेत्यर्थः । इष्यत इतीट् 'इषु' इच्छायाम् इत्यस्य क्विपि तृतीयैकवचने रूपमिषेति । धनसमृद्ध्या अन्नेन च (१)सम्मदेमेत्यर्थः । किंभूतेन रायस्पो-

(१) 'सं' ना० ग०।

षेणेषा च। साप्त्यजनुषा सप्तैव साप्ताः । 'सप्तन्' शब्दस्य नकारान्तस्य स्वार्थिकेऽणि टिलोपे साप्तमिति । अकारस्य यकारादेशश्छान्दसः । जनुश्शब्दो जन्मवाची षकारान्तः । सप्तजनूंषि (१)जन्मानि भावीत्यर्थे "तमधीष्टो भृतो भूतो भावी" इति अर्हीयष्ठक्। तस्यापि "अध्यर्द्धपूर्वाद्द्विगोर्लुगसंज्ञायाम्" इति लुक्। ततस्तृतीयैकवचनम् । साप्त्यजनुषा सप्तजन्मभाविनेत्यर्थः । अत एव बृहस्पतिः—

हाटकक्षितिगौरीणां सप्तजन्मानुगं फलम् । इति ।

गौरीशब्देनात्र गौरभिधीयते । प्रकरणात् । सुभगा लोकस्यप्रियाः सम्मदेमेत्यन्वयः । रायस्पोषेणेति 'रै' शब्दस्य षष्ठ्यन्तस्य छान्दसो विसर्जनीयस्य सकारः । अन्ये च वृषोत्सर्गस्य मन्त्राः सम्प्रत्यधीयमानमाध्यन्दिनीयशाखीयाः ततस्तत्र नात्यन्तिकः संशयः इति न विवेचिताः । पितृहीनस्य बालस्य नामादिकर्ता पितृहीनबालकनिरूपितमात्रादि(२)(पित्रादि) मातामहादीनामाभ्युदयिकश्राद्धं(३) कुर्यात् तथाहि—

( १ ) 'सप्त' क० । ( २ ) क० ना० क० ख० ।

( ३ ) नान्दीश्राद्धं द्विविधं सपिण्डकमपिण्डकञ्च । तदुक्तं भविष्यपुराणे—

पिण्डनिर्वपणं कुर्यान्न वा कुर्याद्विचक्षणः ।
वृद्धिश्राद्धे कुलाचारदेशकालाद्यवेक्ष्य हि ॥ इति ।

अपिण्डकेऽग्नौकरणादीनामपि निषेधः । तथाहि—

अग्नौकरणमर्घं चावाहनं चावनेजनम् ।
पिण्डश्राद्धे प्रकुर्वीत पिण्डहीने निवर्तते ॥
पिण्डनिर्वापरहितं यत्र श्राद्धं विधीयते ।
स्वधावाचनलोपोऽस्ति विकिरस्तु न लुप्यते ॥
अक्षय्यं दक्षिणा स्वस्ति सौमनस्यं यथास्थितम् ॥ इति ।

स्वपितृभ्यः पिता दद्यात्पुत्रसंस्कारकर्मणि ।

पिण्डानोद्वाहनात्तेषां तस्याभावे तु तत्क्रमात् ॥

इति वाक्यं प्रमाणम् । अस्यार्थः—पुत्रसंस्कारकर्मणि नामकरणादौ पिता जनकः स्वपितृभ्यः स्वकीयपित्रादिभ्यः पिण्डान्दद्यात् श्राद्धं कुर्यात् । पिण्डपदेन श्राद्धोपलक्षणात् । आउद्वाहनात् उद्वाहनं विवाहमभिव्याप्य सुतसंस्कारकर्माणि । तेन विवाहपर्यन्तं सुतसंस्कारकर्म इति पर्यवस्यति । तस्याभावे तस्य-पितुरभावे 'तत्क्रमात्' तदुपक्रमेण पितुरुपक्रमेण पिण्डान्दद्यादित्यर्थः । तथा च यो नामादिकर्ता पितृहीनस्य भवति स पितृहीनपित्राद्युपक्रमेण श्राद्धं कुर्यादित्यर्थः सम्पद्यते । ततश्च पितृहीननिरूपितपित्रादिबोधनात्तन्निरूपितमात्रादि—मातामहादयोऽपि लभ्यन्ते । 'तस्य' इतिपदेन पित्र्युपस्थानात् । तस्य सम्बन्धिशब्दत्वेन पुत्रस्योपस्थितौ तेनैव कर्तव्यसंस्कारेण पित्रादिनिरूपणं(१)(न तु माणवक(२) पित्रादिना । अत एकत्र तेन निरूपणान्मात्रादिपदके मातामहादिपदके च पितृहीनेन पुत्रेणैव निरूपणम् ।) तस्योपस्थितत्वात् निरूपकान्तराकाङ्क्षानिवृत्तेः उपस्थापकाभावाच्चेति । तथा च तत्र—माणवकमातृपितामहीप्रपितामहीनां नान्दीमुखीनां माणवकपितृपितामहप्रपितामहानां नान्दीमुखानां माणवकमातामहप्रमातामहवृद्धप्रमातामहानां नान्दीमुखानां माणवकनामकरणनिमित्तकमाभ्युदयिकश्राद्धमहं करिष्ये' इति नामगोत्राद्युच्चारणपूर्वकं वाक्यं कर्तव्यं भवति । एष

(१) कंसान्तर्गतं ना० ग ।

(२) 'पितृपित्रापि' क० ख० ।

चार्थः श्रीदत्तोपाध्यायसम्मतः । तथाहि पितृभक्तिश्राद्धकल्पग्रन्थे तैर्लिखितम्—अपुत्रस्य सपिण्डनानन्तरं कुत्र श्राद्धप्राप्तिरित्युक्त्वा तदीयकन्याविवाहे आभ्युदयिकश्राद्धे सम्प्राप्नोतीति । तथा च कन्ययैव तत्र पित्रादिनिरूपणं नतु कन्यापित्रा पित्रादिनिरूपणामिति स्फुटम् । यत्र तु पितुरभावो नास्ति किन्तुक्षतादिना तस्याकर्तृत्वं तत्र तत्प्रतिनिधित्वेन तत्पुत्रनामादिकर्त्ता यो भवति स माणवकपितुर्मात्रादिपित्रादिमातामहादीनां श्राद्धं कुर्यात् । 'तस्याभावे तु तत्क्रमात्' इति वाक्यस्य तत्रानुपस्थितेः । तथा च तत्र माणवकपितुर्मातृपितामहीप्रपितामहीनां नान्दीमुखीनां माणवकपितुः पितृपितामहप्रपितामहानां नान्दीमुखानां माणवकपितुर्मातामहप्रमातामहवृद्धप्रमातामहानां नान्दीमुखानां माणवकनामकरणनिमित्तकमाभ्युदयिकश्राद्धमहं करिष्ये' इति नामगोत्राद्युच्चारणपूर्वकं वाक्यं कर्तव्यम् । एवं च पितुरभावे सर्वत्र माणवकेनैव निरूपणम् । माणवकपितरि जीवत्यपि माणवकपितृनिरूपिता एव मात्रादिपित्रादिमातामहादय इति निस्तरङ्गम् । आशौचान्तद्वितीयदिने प्रथमं 'प्रेतत्वविमुक्तिकाम आद्यादीनि यथाकालं षोडशश्राद्धान्यहं करिष्ये' इति प्रथमः सङ्कल्पः । ततः 'प्रेतत्वविमुक्तिहेतुकषोडशश्राद्धान्तर्गताद्यश्राद्धमहं करिष्ये' इति द्वितीयः सङ्कल्पः । यत्र तु एकादशमासाभ्यन्तरेऽधिमासपातस्तत्र 'प्रेतत्वविमुक्तिकाम आद्यादीनि यथाकालं सप्तदशश्राद्धान्यहं करिष्ये' इति प्रथमः सङ्कल्पः । अत्र च संवत्सराभ्यन्तरे यद्यधिमासपातो भवति तदा मासिकार्थं दिनमेकं वर्द्धयेदिति विष्णुवाक्यं प्रमाणं

सप्तदशश्राद्धस्य करणे। तथाहि—मासिकश्राद्धाधिकरणत्वेनाधिकं दिनमेकं तद्वाक्यं बोधयति। तेनाधिकतया सप्तदशश्राद्धं बोधयति। तेनैकादशाहानन्तरं यत्र द्वादशभिर्दिनैर्द्वादशमासिकानि कृत्वा त्रयोदशेऽह्नि सपिण्डनं कुर्यादिति विधिः। तत्रैवाधिमाससम्भवे एकदिनश्राद्धवृद्ध्या त्रयोदशभिर्दिनैस्त्रयोदशमासिकानि कृत्वा चतुर्दशेऽह्नि सपिण्डनं कुर्यादिति पर्यवसितार्थो भवति। एवं च एकादशमासाभ्यन्तरेऽधिमासपाते सप्तदशश्राद्धानि कर्तव्यानीत्यायाति। तथा च मुख्यपक्षे वर्षसपिण्डने मासक्रमेणैव त्रयोदशसु मासेषु त्रयोदशमासिकानि मरणतिथिसजातीयतिथौ कर्त्तव्यानीति। एकाहोनषाण्मासिके ऊनषाण्मासिकम्, एकाहोनवर्षे ऊनवार्षिकं श्राद्धं कर्तव्यम्। द्वादशदिने सपिण्डने प्रथममासिकद्वितीयमासिकतृतीयमासिकचतुर्थमासिकपञ्चममासिकोनषाण्मासिकषष्ठमासिकसप्तममासिकाष्टममासिकनवममासिकदशममासिकैकादशमासिकद्वादशमासिकोनवार्षिकत्रयोदशमासिकानि अनुक्रमेणैकस्मिन् दिने कर्तव्यानि। त्रिपक्षे सपिण्डने मासे प्रथममासिकं कृत्वा त्रिपक्षपूरणात्पूर्वदिने द्वितीयमासिकादित्रयोदशमासिकपर्यन्तानि द्वादशमासिकानि कर्तव्यानि। त्रिपक्षपूरकमरणतिथिसजातीयतिथौ वा सपिण्डनादिन एव सर्वाणि कर्तव्यानि। षष्ठमासे सपिण्डनपक्षे पञ्चसु मासेषु पञ्चमासिकानि मरणतिथिसजातीयतिथौ कृत्वा षाण्मासिकपूरणपूर्वदिने ऊनषाण्मासिकादीनि दशमासिकानि कर्तव्यानि। षष्ठमासपूरकमरणतिथिसजातीयतिथौ सपिण्डनादिन एव वा ऊनषाण्मासिकादीनि कर्तव्यानि। नवममासे सपिण्डने

अष्टसु मासेष्वष्टमासिकानि कर्तव्यानि । एकाहोन षाण्मासिके ऊनषाण्मासिकं कर्तव्यम् । नवममासपूरणपूर्वदिने नवममासिकादीनि षाण्मासिकानि कर्तव्यानि । नवममासपूरणमरणतिथिसजातीयतिथौ सपिण्डनदिने एव वा कर्तव्यानि । एकादशाहानन्तरं दिने दिने एकैकमासिकश्राद्धकरणे त्रयोदशसु दिनेषु त्रयोदशमासिकानि कर्तव्यानि । षष्ठे दिने मासिकद्वयमूनषाण्मासिकं षष्ठमासिकं च कर्तव्यम् । त्रयोदशे दिने मासिकद्वयमूनवार्षिकं त्रयोदशमासिकं च कर्तव्यम् । चतुर्दशे दिने सपिण्डनम् । शूद्रेण तु त्रयोदशे दिने एव सपिण्डनं कर्तव्यमिति विशेषः । अथ च त्रिपक्षादौ सपिण्डनपक्षे प्रथममासादौ यदि स्वाशौचमापतति तदाशौचापगमे मासिकं कृत्वाग्रिममासादौ प्रकृतक्रमेण मासिकं कर्तव्यम् । (१) (क्षतं यद्यापतति तदा क्षतान्ते मासिकं कृत्वाऽग्रे प्रकृतक्रमेण मासिकं कर्तव्यम् ।) यदि राष्ट्राद्युपप्लवरूपविघ्नेन दिनविस्मरणादिना वा क्षयाहे श्राद्धं न कृतं तदा एकादश्यां पतितमासिकानि कृत्वाऽग्रे प्रकृतक्रमेण मासिकं कर्तव्यम् । मासिकस्यैकोद्दिष्टरूपत्वात् । एकोद्दिष्टस्य च कर्तव्यतायाम्—

श्राद्धविघ्ने समुत्पन्ने क्षयाहेऽविदिते तथा ।
एकादश्यां प्रकुर्वीत कृष्णपक्षे विशेषतः

इति वाक्यं प्रमाणम् । क्षताशौचयोरपि तदनन्तरकालकर्तव्यत्वं बोधितमेकोद्दिष्टस्येति । अग्रिममासे पतितमासिकं क्रियते इति जघन्यः पक्षः, प्रमाणाभावात् । केचित्तु प्रथममासे

(१) कंसान्तर्गतं ना० क० ख० ।

मासिकश्राद्धाकरणे 'अपर्याप्तावृतुं प्रति' इति वाक्येन मासद्वयान्ते मासिकद्वयं कर्तव्यम् । एवं प्रत्यृतुमासिकद्वयं कर्तव्यम् , इत्थयमेव क्रमः । तत्र च वाक्यबलेन तृतीयऋतौ पूर्वदिने ऊनषाण्मासिकम् । ऋतुपूर्तौ पञ्चममासिकषष्ठमासिके कर्तव्ये । एवं च षष्ठऋतुपूर्वदिने ऊनवार्षिकं, षष्ठऋतुपूर्तिदिने एकादशमासिकंद्वादशमासिके कर्तव्ये । यत्र तु द्वादशे एव दिने सपिण्डनकर्तव्यतायां प्रथममासिकादौ कृते अशौचादिना सपिण्डनबाधः तत्र कृतमासिकादेरकिञ्चित्करत्वम् । तद्दिनसपिण्डनक्रियोपाधिकर्तव्यतया सपिण्डनासम्भवे, कृतमासिकानामयथाकालकृतत्वेनाकृतकल्पत्वात् । एकाहादिकर्तव्यसपिण्डनक्रियाकल्पे तु प्रथमगृहीतकल्पस्यानिर्वाहे कल्पान्तरं नाश्रीयत इति मतमनादेयम् । प्रेतत्वविमुक्तिहेतुत्वेन सपिण्डनक्रियाया अवश्यकर्त्तव्यत्वेन बाधकन्यायान्तरानवकाशादिति । अथावश्यकश्राद्धकालाः । तत्र विष्णुः—'अमावास्यास्तिस्रोऽष्टकास्तिस्रोऽन्वष्टका माघीप्रौष्ठपद्यूर्ध्वकृष्णत्रयोदशी व्रीहियवपाकौ च'इति ।

एतांस्तु श्राद्धकालान्वै नित्यानाह प्रजापतिः ।
श्राद्धमेतेष्वकुर्वाणो नरकम्प्रतिपद्यते ॥

अमावास्या इत्यनेन केवलाया अमावास्याया विधानादमावास्यामात्रं निरग्नीनामावश्यकः श्राद्धकाल इति प्रतिपादितम् । तेनाग्निमतामिन्दुक्षयो निमित्तान्तरं तत्र । तेषामिन्दुक्षयापेक्षया तद्व्यवस्थापकानि बहूनि वाक्यानि तत्रोपयुक्तानि । अमावास्यायां तु यस्मिन्दिनेऽपराह्णेऽमावास्यालाभस्तस्मिन्नेव दिने श्राद्धम् । उभयदिने त्वपराह्णेऽमावास्यालाभे प्रथमदिने श्राद्धम् ।

प्रथमप्राप्तत्यागस्यान्याय्यत्वात् । उभयदिने त्वपराह्णेऽमावास्याया अलाभे उत्तरदिने मध्याह्णेऽपि श्राद्धं कर्तव्यम् । मुख्यकालालाभात् । अविशेषात् । मलमासामावास्यायामप्यावश्यकं श्राद्धं कर्तव्यम् । 'तिस्रोऽष्टका' इति पौषमाघफाल्गुनकृष्णाष्टम्यः । तासु चापूपमांसशाकानि श्राद्धद्रव्याणि । तत्रापूपस्यान्नरूपतया तस्यैव तृप्तिक्षमतया मुख्यत्वम् । मांसशाकयोस्तूपकरणत्वेनाऽन्वयः यथासङ्ख्यम् । अष्टकाद्वये मुख्यद्रव्यमोदनादिकमेव । अत्र पारस्करगृह्यम्—"ऊर्ध्वमाग्रहायण्यास्तिस्रोऽष्टका ऐन्द्री, वैश्वदेवी, प्राजापत्या, पित्र्याप्यपूपमांसशाकैर्यथासंख्यम्" अत्र तिसृषु यथासंख्यम् । 'पित्र्यापि' इत्यनेन चतुर्थी अष्टका विधीयते(१) । तत्रापि शाकमुपकरणम् ।

वर्षासु मध्ये शाकैश्च चतुर्थीमेव सर्वदा ।

वर्षासु मध्ये अपरपक्षस्य भाद्रपदकृष्णपक्षत्वात्तदष्टम्यां वर्षामध्यत्वम् । 'शाकैः' इति तस्यां ब्रह्मपुराणेन शाकोपकरणविधानात् । एवं च स्वातन्त्र्येणाप्याश्विनकृष्णाष्टम्यामष्टकात्वेन

(१) आश्वलायनस्मृतावपि—"हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः" इत्यनेनापि तावत्य एवाष्टकाः कथिताः । भाद्रकृष्णाष्टमी च पञ्चम्यष्टका पौराणिकी । तथा च पाद्मे—

वसुनामा पिता स्वां कन्यां शशापानुजग्राह च ।

साष्टकात्वेन चोत्पन्ना इत्युक्तः ।

प्रौष्ठपद्यष्टका भूयः पितृलोके भविष्यति ।
आयुरारोग्यदा नित्यं सर्वकामफलप्रदा ॥

इत्यनेन पञ्चम्यष्टका काम्या कृष्णादिमासक्रमेण बोध्या, पूर्वकथिता चतस्रः साग्नेर्नित्या इति विवेकः ।

श्राद्धविधानात्तस्मिन्पक्षे दिनान्तरे श्राद्धासम्भवेऽप्यष्टम्याः स्वातन्त्र्येण निमित्तत्वमिति प्रतिपादितम्। अत्र चतसृष्वप्यपूपमांसशाकासम्पत्तौ (१) द्रव्यान्तरेणापि श्राद्धकरणं युक्तम्। श्राद्धस्य नित्यत्वादिति प्रतिभाति। (२) अन्वष्टकास्तु साग्नीनामावश्यकश्राद्धकालः। अन्वष्टकाश्राद्धविधाने साग्निकर्तृकत्वलिङ्गदर्शनादिति। माघी मघायुक्ता माघपूर्णिमा तत्रैव माघीशब्दस्य व्युत्पत्तिसिद्धत्वात्। अत्रान्वष्टकास्तिस्रः साग्नीनामावश्यकाः श्राद्धकालाः। अपरः साग्निनिरग्निसाधारणआवश्यकश्राद्धकालः, प्रौष्ठपद्यूर्ध्वं कृष्णत्रयोदशी अपरपक्षीया। एतावताश्विनकृष्णपक्षस्यैव नित्यकालत्वेन तत्र दिनान्तरे अशौचादिना श्राद्धबाधेऽपि त्रयोदश्यामावश्यकं श्राद्धकरणमित्युक्तं भवति। 'व्रीहियवपाकौ च' इति। शरदि वसन्ते च व्रीहियवाभ्यामावश्यकं श्राद्धम्। अत्र नवव्रीहियवयोरसम्पत्तौ पुराणाभ्यां व्रीहियवाभ्यां तत्र श्राद्धं कर्तव्यम्। तदभावे द्रव्यान्तरेणापि श्राद्धं कर्तव्यमिति। तथा च नवप्राशनकर्मप्रस्तावे गोभिलगृह्यभाष्ये—"गृहमेधी व्रीहियवाभ्यां शरद्वसन्तयोर्यजेत श्यामाकैर्वनी वर्षासु आपत्कालेऽन्येन पुराणैर्वा" इति वचनात्।

---

(१) अत्राशक्तावनुकल्पमाहाश्वलायनः—"अप्यनडुहो यवसमाहरेदग्निना वा कक्षमुपोषेदेषाऽष्टकेति नत्वेवानष्टकः स्यात्" इति। यवसमार्द्रतृणम्। कक्षं शुष्कतृणं उपोषेद्दहेत्।

(२) अष्टका उक्त्वाहाश्वलायनः—"अपरेद्युरन्वष्टक्यम्" इति। अत्र च नवम्या अपराह्णव्याप्त्या न निर्णयः। तस्यानिमित्तत्वश्रुतेः। सर्वसूत्रस्मृतिषूत्तरेद्युः श्वोभूत इत्यष्टकोत्तरदिनस्यैवान्वष्टका निमित्ततया श्रवणाच्च।

अत्र वनी वानप्रस्थ इत्यर्थः। यद्यप्यत्र यागे विधानं तथापि श्राद्धेऽपि द्रव्याकाङ्क्षायास्तुल्यतया तदसम्पत्तौ पुराणव्रीहियव-विधिरन्यद्रव्यविधिश्चोपतिष्ठत एव। वसिष्ठः—'श्रावण्याग्रहायण्योरष्टकासु च पितृभ्यो दद्यात्'। श्रावण्याग्रहायण्यौ श्रावण-मार्गशीर्षपूर्णिमे श्रवणमृगशिरोयुक्ते। एतयोर्निरग्नानामप्यावश्यकं श्राद्धकरणम्। विशेषाश्रवणात्। एतच्च श्राद्धकल्पे श्राद्धपङ्क्त्यां च सुव्यक्तम्। अष्टकाः कथिता एव ब्रह्मपुराणे।

मनुः—

आश्वयुक्कृष्णपक्षे तु श्राद्धं देयं दिने दिने।
त्रिभागहीनं पक्षं वा त्रिभागं त्वर्द्धमेव वा॥

दिने दिने प्रतिदिनमित्यर्थः। एवं चापरपक्षीयदिनत्वेन विधानात्तस्मिन्पक्षे दिनपुरस्कारेण श्राद्धस्य प्रतिदिनकर्त्तव्यत्वं बोधितम्। तथा चापरपक्षे सर्वेषु दिनेष्वपराह्णकाले श्राद्धं कर्त्तव्यम्। न तत्र तिथिविशेषजिज्ञासेति च। तिथिविशेषे कथितं फलं तत्रापि भवत्येव। श्राद्धस्य वस्तुतस्तत्तत्तिथ्यवच्छिन्नकालिकत्वात्। दिनपुरस्कारेणैव श्राद्धकरणे—

कन्यागते सवितरि यान्यहानि तु षोडश।
क्रतुभिस्तानि तुल्यानि तेषु दत्तमथाक्षयम्॥

इति वाक्ये अह्नां षोडशत्वं सङ्गच्छते। तिथिवृद्ध्यापरपक्षस्य षोडशदिनात्मकत्वसम्भवात्। एवं च त्रयोदश्याममावास्यायां चाग्रिमदिनेऽपराह्णकालालाभेऽपि निषिद्धप्रातर्मुहूर्त्तद्वयातिरिक्त-काले कृतं श्राद्धं तदुभयातिथ्यवच्छिन्नकालश्राद्धेनापि श्राद्धं कर्त-व्यम्। दिनत्वेन श्राद्धकरणे पुरस्कारात्सर्वस्मिन् दिने तत्पक्ष-

निमित्तकमेव श्राद्धमायाति। दिने दिने इत्यस्य तिथौ तिथौ व्याख्याने प्रथमं दिनशब्दस्य मुख्यार्थत्यागः, एकस्मिन्दिने श्राद्धयोग्यतिथिद्वयप्राप्तौ पार्वणद्वयप्रसङ्गः। एकस्मिन्दिने यस्यां तिथौ श्राद्धं कृतं तस्यां तिथौ दिनान्तरे श्राद्धकालप्राप्तौ श्राद्धानाचरणम्। तत्तिथ्यवच्छेदेन श्राद्धस्य कृतत्वात्। एतदुभयञ्च न सर्वप्रामाणिकव्यवहारसिद्धमिति दिने दिन इति मुख्यशब्दार्थपरिग्रह एव युक्तः। 'त्रिभागहीनं पक्षम्' इति तृतीयभागहीनपक्षस्य विधानात्। अत्र पञ्चमीप्रभृतिश्राद्धविधानम्। 'त्रिभागम्' इति तृतीयभागमारभ्य दशमीप्रभृतीत्यर्थः। 'अर्द्धमेव' इति पक्षार्द्धविधानमष्टमीप्रभृतीत्यर्थः। अत्र पक्षे कल्पचतुष्टयेऽपि चतुर्दशीत्यागः पार्वणश्राद्धे।

कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम्।
श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतराः॥

इति मनुना चतुर्दशीपार्वणश्राद्धस्य निषेधात्। त्रयोदशीश्राद्धेऽपि यद्यपि निन्दा श्रूयते तथापि निन्दायाः काम्यश्राद्धविषयत्वात्। आश्वयुक्कृष्णपक्षीयदिनप्राप्तस्यावश्यकत्वं तस्य नित्यत्वादिति त्रयोदशीश्राद्धं कर्त्तव्यमिति बहुप्रामाणिकव्यवस्था।

नेच्छेत्त्रयोदशीश्राद्धं पुत्रवान्यः सुतायुषे।

इत्यादि निषेधवाक्यमलौकिकमिति रत्नाकरः। चतुर्दश्यां शस्त्रादिहतस्यैकोद्दिष्टविधिना श्राद्धम्। अत्र—

प्रायोऽनशनशस्त्राग्निविषोद्बन्धनिनां तथा।
चतुर्दश्यां तु कर्त्तव्यं तृप्त्यर्थमिति निश्चयः॥

इत्यादि ब्रह्मपुराणादिवाक्येषु रोगेतरनिमित्तेन मृतानां चतुर्दश्यां श्राद्धं कर्तव्यमिति तात्पर्यम्। आचारानुरोधात्। तेन स्त्रिया अपि प्रसवेन मृतायाश्चतुर्दश्यामेकोद्दिष्टम्। वायुपुराणे—

युवानस्तु गृहे यस्य मृतास्तेषां तु दापयेत्।
शस्त्रेण च हता ये वै तेषां दद्याच्चतुर्दशीम्॥

गृहे इत्युपलक्षणम्। तेन युवदशायां यत्र कुत्रापि मृतानां पित्रादीनां श्राद्धं चतुर्दश्यां कर्तव्यम्। शस्त्रहतानां च श्राद्धं कर्तव्यमित्यर्थः। युवमरणे तु युवदशामृतत्वमेव प्रयोजकं न तु रोगेतरनिमित्तमृतत्वम्। हेतुविशेषानभिधानात् युवेतराणां रोगेतरनिमित्तमृतत्वं प्रयोजकम्। अत एव युवेतरस्यानुपसर्गहेतुकमरणे चतुर्दश्यां न श्राद्धम्। रोगनिमित्तेन मृतत्वात्। एतच्च श्राद्धमेकोद्दिष्टविधिना। आचारात्।

चतुर्दश्यां तु यच्छ्राद्धं सपिण्डीकरणे कृते।
तदेकोद्दिष्टविधिना कर्तव्यं शस्त्रघातिनाम्॥

इति गौडवाक्यदर्शनाच्च। शस्त्रघात एषामस्तीति शस्त्रघातिनः शस्त्रादिहतास्तेषामित्यर्थः। स्त्रीणामप्येतदेकोद्दिष्टं पुंस्त्वस्याविवक्षितत्वादिति। अत्र च शस्त्रादिनिमित्तमृतानां यौवने मृतानाञ्च चतुर्दशीश्राद्धसमयो बोधित इति। शस्त्रघातादिना मृतस्यैतद्दिनश्राद्धभागित्वबोधने तात्पर्यात्। एकोद्दिष्टश्राद्धसङ्कल्पवाक्ये तत्तन्निमित्तकमरणोल्लेखो न प्रयोजकः। वस्तुसतामेव निमित्तानामेतच्चतुर्दशीश्राद्धनिमित्तत्वात्। तथा च 'अद्याश्विनकृष्णचतुर्दश्याममुकगोत्रस्य पितुरमुकशर्मण एकोद्दिष्टश्राद्धमहं करिष्ये' इत्येवं सङ्कल्पः कर्तव्यः। युवानस्त्वत्र षोडशवर्षवय-

त्सकमारभ्य त्रिंशद्वर्षपर्यन्ता विवक्षिता इति रत्नाकरप्रभृतिनिबन्धाः। अत्र च पक्षे प्रतिपदादितिथिषु फलानि च नानाविधानि नानास्मृतिषु कथितानि। तेषु पुरुषमात्रकामनाविषयफलानि निष्कृष्य लिख्यन्ते। तद्यथा—

प्रतिपदि धनलाभलब्धाऽविनाशौ फलम्। द्वितीयायां द्विपदाधिपत्यम्। तृतीयायां सर्वकामप्राप्तिः। चतुर्थ्यां यशःप्राप्तिः। पञ्चम्यां महालक्ष्मीः। षष्ठ्यां द्विजकर्तृकपूजनम् सप्तम्यां गणाधिपत्यम्। अष्टम्यां सम्पूर्णर्द्धिः। नवम्यां स्त्रीविषयकैश्वर्यम्। दशम्यां बहुगोजातीयलाभः। एकादश्यां बहुब्रह्मवर्चस्विपुत्राः। द्वादश्यां सुवर्णरजतम्। त्रयोदश्यां जातिश्रैष्ठ्यम्। चतुर्दश्यां भूतिः। अमावास्यायां प्रतिपदादितिथ्युक्तसर्वफलानि। अत्र च नित्यत्वपुरस्कारेणापि सर्वदिनक्रियमाणश्राद्धेषु तत्तत्तिथिषु तत्तत्फलप्राप्तिरपि भवतीति प्रतिभाति। सन्ध्यावन्दनस्येव सन्ध्यावटा (१) दिदेशकरणकथितफलयोगात् गङ्गातीरादिकृतावश्यकश्राद्धवच्चेति। आश्विनकृष्णपक्षे केवलायास्त्रयोदश्याः पार्वणश्राद्धं प्रतिनिमित्तत्वमुक्तं विष्णुना—'प्रोष्ठपद्यूर्ध्वं कृष्णत्रयोदशी' इत्यनेन। केवलाया मघाया निमित्तत्वमुक्तं देवीपुराणे—

तत्रापि महती पूजा कर्तव्या पितृदैवते।
ऋक्षे पिण्डप्रदानं तु ज्येष्ठपुत्री विवर्जयेत्॥

---

(१) सन्ध्यावटोऽयं छिन्नो नाम्नैवावशेषितः। यः प्रयागक्षेत्रे धूमशकटस्य निर्गमस्थाने आसीत्। ग्रामसमीपस्थो गर्तविशेष सन्ध्यावन्दनादि नित्यकृत्योपयोगितया जनैर्गृहीतो जलाशय एव 'सन्ध्यावट' इत्येके "गर्तावटो भुवि श्वभ्रे" इत्यमरः।

इत्यनेन। पितृदैवते ऋक्षे मघायामित्यर्थः। मघात्रयोदश्योर्मिलितयोरपि निमित्तत्वमुक्तं बहुभिः। तत्र शङ्खः—

प्रौष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम्।
प्राप्य श्राद्धं हि कर्त्तव्यं मधुना पायसेन च॥

श्रीमहाभारते—

अपि नः स कुले ज्यायान्यो नो दद्यात्त्रयोदशीम्।
मघायां सर्पिषा युक्तम्पायसं दक्षिणायने॥

मनुः—

यत्किञ्चिन्मधुना मिश्रं प्रदद्यात्तु त्रयोदशीम्।
तदप्यक्षयमेव स्याद्वर्षासु च मघासु च॥

वसिष्ठः—

पिता पितामहश्चैव तथैव प्रपितामहः।
उपासते सुतं जातं शकुन्ता इव पिप्पलम्॥
मधुमांसैश्च शाकैश्च पयसा पायसेन च।
एष नो दास्यति श्राद्धं वर्षासु च मघासु च॥

ब्रह्मपुराणे—

आश्वयुज्यां तु कृष्णायां त्रयोदश्यां मघासु च।
प्रावृडृतौ यमः प्रेतान्पितृंश्चापि यमालयात्॥
विसर्ज्जयति मानुष्ये कृत्वा शून्यं स्वकं पुरम्।
क्षुधार्त्ताः कीर्त्तयन्तश्च दुष्कृतं तु स्वयंकृतम्॥
पायसं पुत्रपौत्रेभ्यः काङ्क्षन्तो मधुसंयुतम्।
तस्मात्तांस्तत्र विधिना तर्पयेत्पायसेन च॥
मध्वाज्यतिलमिश्रेण तथा शीतेन चाम्भसा।

ग्रासमात्रं परगृहाच्छक्तं यः प्राप्नुयान्नरः ॥
भिक्षामात्रेण यः प्राणान्संधारयति वा स्वयम् ।
यो वा संवर्द्धयेद्देहं प्रत्यहं स्वात्मविक्रयात् ॥
श्राद्धं तेनापि कर्तव्यं तैस्तैर्द्रव्यैः सुसञ्चितैः ।
त्रयोदश्यां प्रयत्नेन वर्षासु च मघासु च ॥
नास्मात्परतरः कालः श्राद्धेष्वन्यत्र विद्यते ।
यत्र साक्षाद्धि पितरो गृह्णन्त्यमृतमक्षयम् ।

'आश्वयुज्याम्' इति त्रयोदश्यामित्यस्य विशेषणम् । तेनाश्विनकृष्णत्रयोदश्यामित्यर्थः । प्रावृड्ऋतौ वर्षर्तावित्यर्थः । शुक्लादिमासरीत्याऽपरपक्षस्य भाद्रपदान्तर्गतत्वाद्वर्षर्तुत्वम् । अत्र तत्तद्द्रव्यविधानं श्राद्धस्यावश्यकर्तव्यत्वविधानं फलप्रकर्षविधानं च । मघात्रयोदश्योर्मिलितयोरमिलितयोः मघात्रयोदश्योः सूर्यस्य हस्तनक्षत्रावस्थितौ तृतीयं निमित्तम् । तस्य 'गजच्छाया' इति नाम ।

तथा च ब्रह्मपुराणे—

योगो मघात्रयोदश्योः कुञ्जरच्छायसंज्ञकः ।
भवेन्मघायां संस्थे च शशिन्यर्के करे स्थिते ॥

तत्र च श्राद्धमावश्यकम् । तत्र याज्ञवल्क्यः—

व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्ययोः ।
श्राद्धम्प्रतिरुचिश्चैव श्राद्धकालाः प्रकीर्तिताः ॥

व्यतीपातो ज्योतिश्शास्त्रे प्रसिद्धः । सूर्याचन्द्रमसोः क्रान्तिसाम्यसमयः पुण्यकालविशेषः । अत्र (१) च गजच्छायायाश्च

(१) 'च' नास्ति क० ख० ग० ।

न्द्रसूर्यग्रहणस्य चावश्यकश्राद्धकालत्वम् । अत्र केवलायां त्रयोदश्यां मिलितयोर्मघात्रयोदश्योर्गजच्छायायां च सपुत्रापुत्रयोरप्यधिकारः । पिण्डवत्येव श्राद्धे पुत्रिण आवश्यकश्राद्धानिषेधात् ।

नेच्छेत्त्रयोदशीश्राद्धं पुत्रवान्यः सुतायुषे ।

इत्यादिनिषेधवाक्यममौलिकमिति रत्नाकरलिखनात् पुत्रवतोऽपि त्रयोदशीश्राद्धाधिकारः । केवलायां मघायां पुत्रवता श्राद्धं पिण्डरहितं कर्तव्यमिति शेषः । गजच्छायायोगो यावत्कालमवतिष्ठते (१) तावत्कालपर्यन्तं ब्राह्मणेन भोजनं न कर्तव्यम् । तथा ब्रह्मपुराणे—

सूतके मृतके चापि ग्रस्तयोश्चन्द्रसूर्ययोः ।
छायायां कुञ्जरस्याथ भुक्त्वा तु नरकं व्रजेत् ॥
भुक्त्वा प्रमादाद्विप्रस्तु (२) सम्यक्चान्द्रायणं चरेत् ।

(३)'प्राक्छाये कुञ्जरस्य च' इति याज्ञवल्क्यवाक्ये श्राद्धं

---

(१) 'तावत्कालं' क० ख० ग० । (२) 'चान्द्रायणव्रतं चरेत्' ग० ।

(३) 'प्राक्छाय' इति । अत्र गजच्छाया द्विविधा । गजस्यच्छाया गजच्छाया इत्येका । 'योगो मघात्रयोदश्योः' इत्यादिरूपा पारिभाषिकी द्वितीया ।

तत्र आद्यायां प्रमाणानि काठकगृह्ये—"एतद्ध्येव—पितृणामयनं यद्धस्तिश्राद्धं तस्माच्छायायां श्राद्धं दद्यात्" । महाभारते लिङ्गदर्शनमपि—

हस्तिच्छायासु कुर्वीत कर्णव्यजनवीजितः । इति ।

मनुरपि—

पायसं मधुसर्पिर्भ्यां प्राक्छाये कुञ्जरस्य तु ।

इति प्राचीछाया यस्मिन्देशे सा प्राक्छाया तस्मिन् इत्यर्थः ।

प्रति निमित्तान्तरमेवोक्तम् । पारस्करः—"श्रद्धान्वितः श्राद्धं कुर्वीत, शाकेनापि नापरपक्षमतिक्रामेत्" एतत्पक्षीयश्राद्धस्याक्षयफलत्वमपि । तस्मिन्पक्षे कल्पचतुष्टये प्रथमपक्षाद्युपक्रमेण श्राद्धारम्भे कृते तत्र विघ्ने वृत्तेऽग्रिमकल्पो नानुसरणीय इति मतमनादेयम् । नित्यत्वे कल्पान्तरे बाधकन्यायानवतारादिति । एतस्मिन्पक्षे श्राद्धकरणाभावे कार्तिकामावास्यायामितोऽप्यावश्यकं श्राद्धम् ।

येयं दीपान्विता राजन्ख्याता पञ्चदशी भुवि ।
तस्यां देयं न चेद्दत्तं पितॄणां तु महालये ॥

इति वाक्यात् । महालये पितॄणामुत्सवाश्रयेऽपरपक्षे इत्यर्थः । शातातपः—

सर्वस्वेनापि कर्त्तव्यं श्राद्धं वै राहुदर्शने ।
अकुर्वाणस्तु तच्छ्राद्धं पङ्के गौरिव सीदति ॥
राहुदर्शनदत्तं हि श्राद्धमाचन्द्रतारकम् । इति ।
नवोदके नवान्ने च गृहप्रच्छादने तथा ।
पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च ॥
तस्माद्दद्यात्सदा युक्तो विद्वत्सु ब्राह्मणेषु च ।

'नवोदके' इति वर्षोपक्रमे जलसंभवे इत्यर्थः । सदाचारादार्द्रानक्षत्रावस्थितसूर्यावच्छिन्नसमय इत्यर्थः । 'नवान्ने' इति शरदि वसन्ते च इति प्राञ्चः । 'गृहप्रच्छादने' इति गृहोपरि तृणेनाच्छादनम् । एतत्पार्वणश्राद्धनिमित्तम् । गृहप्रवेशस्त्वाभ्युदायकश्राद्धनिमित्तं 'प्रवेशे नववेश्मन' इति वाक्येन विहितम् । तीर्थनिमित्तकं पूर्वं कथितम् । अत्र नवान्नभक्षणनिमित्तत्वं च

पार्वणश्राद्धस्य ज्योतिषे प्रतिपादितम्। तत्र च 'पितृदेवेभ्योऽदत्त्वा नवान्नभक्षणं निषिद्धम्' इति नवान्नभक्षणपूर्वकाले आवश्यकं श्राद्धम्। यद्यपि नवानि नानाविधान्यन्नानि भवन्ति तथापि गृह्ये नवान्नप्राशननिमित्तकनवान्नप्राशनकर्मकथने गृह्यभाष्ये "गृहमेधी व्रीहियवाभ्यां शरद्वसन्तयोर्यजेत श्यामाकैर्वनी वर्षासु" इति लिखनेन वाक्येन षष्टिकयवश्यामाकरूपान्नसंभवकाल एव नियमितः। तत्र श्यामाकोत्पत्तिर्वानप्रस्थानां श्राद्धकालः। गृहस्थानां यवव्रीहिप्राशनपरश्श्राद्धकालः। यद्यपि नवान्नप्राशनकर्मणि इष्टेर्विधानं तथाप्याकाङ्क्षातुल्यतया श्राद्धेऽपि तदुभयमेव निमित्तमिति। तत्र षष्टिकव्रीहिभक्षणनिमित्तकं शरदि, यवान्नभक्षणनिमित्तकं वसन्ते। हेमन्ते हैमन्तिकनवान्नभक्षणनिमित्तम्। ज्योतिषानुसारात्। तथाहि ज्योतिषे भोजराजः—

वृश्चिकेऽर्के पूर्वभागे तु नवान्नं शस्यते बुधैः।
उत्तरे क्रियमाणं तु धनुष्येव कृतं भवेत्॥
धानुर्मासे कृतं श्राद्धं पितॄणां नोपतिष्ठते।
पूर्वभागोऽत्र वृश्चिकत्रयोदशांशकरूपम्। आचारात्।
धनुर्मासि कृतं श्राद्धं हैमन्तीषु निशासु च।
पितरस्तन्न गृह्णन्ति नवान्नामिषकाङ्क्षिणः॥
शुक्ले पक्षे नवं धान्यं पक्वं ज्ञात्वा सुशोभनम्।
सुतिथौ सुमुहूर्ते च नवान्नफलभक्षणम्॥
त्रिजन्मसु त्रयोदश्यां नन्दायां पितृभेऽपि वा।
श्राद्धं शुक्रदिने नैव कार्यं सन्ततिमिच्छता॥

चैत्रे पौषे कृष्णपक्षे नवान्नं वर्जयेत्सदा ।
भवेज्जन्मान्तरे रोगी पितॄणां नोपतिष्ठते ॥

अत्र चैत्रपौषयोर्निषेधात् वृश्चिके नवान्नभक्षणासम्भवे माघादौ श्राद्धपूर्वकं नवान्नभक्षणं युज्यत एवेति । चैत्रे नवान्नभक्षणनिषेधादर्थाद्यवेऽपि नवान्नभक्षणनिमित्तं यवपाकात्पृथक्श्राद्धमायाति ।

वायुपुराणे—

शुक्लपक्षस्य पूर्वाह्णे श्राद्धं कुर्याद्विचक्षणः ।
कृष्णपक्षापराह्णे तु रौहिणं तु न लङ्घयेत् ॥

अत्र 'रौहिणं तु न लङ्घयेत्' इति कृष्णपक्षशुक्लपक्षयोः श्राद्धे रौहिणं पूर्वापरसीमा । तेन शुक्लपक्षश्राद्धे त्ववसानसीमा रौहिणं, तदनन्तरं न कर्तव्यमित्यर्थः । कृष्णपक्षे श्राद्धारम्भसीमा रौहिणं, तावन्नारम्भणीयमित्यर्थः ।

ब्रह्मपुराणे—

पूर्वाह्णे मातृकं श्राद्धमपराह्णे तु पैतृकम् ।
एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम् ॥

मातृकं श्राद्धमन्वष्टकाश्राद्धं पूर्वाह्णे, अपराह्णे पैतृकम् , कृष्णपक्षापराह्णे शुक्लपक्षपूर्वाह्णे विधानात् । वृद्धिनिमित्तकमाभ्युदयिकमित्यर्थः । मत्स्यपुराणे—

प्रातः कालो मुहूर्तांस्त्रीन्सङ्गवस्तावदेव तु ।
मध्याह्नस्त्रिमुहूर्तः स्यादपराह्णस्ततः परम् ॥
सायाह्नस्त्रिमुहूर्तस्याच्छ्राद्धं तत्र न कारयेत् ।
राक्षसीनाम सा वेला गर्हिता सर्वकर्मसु ॥

अह्नो मुहूर्ता विख्याता दश पञ्च च सर्वदा।
तत्राष्टमो मुहूर्तो यः सकालः कुतपः स्मृतः॥
मध्याह्ने सर्वदा यस्मान्मंदीभवति भास्करः।
तस्मादनन्तफलदस्तत्रारम्भो विशिष्यते॥
ऊर्ध्वं मुहूर्तात्कुतपाद्यन्मुहूर्तचतुष्टयम्।
मुहूर्तपञ्चकं चैव स्वधावाचनमिष्यते॥

अत्र सर्ववाक्यैकवाक्यतयाऽयमर्थः। पञ्चधा विभक्तस्य पञ्चदशमुहूर्तात्मकस्य दिवसस्य प्रातः कालादयः पञ्चमभागास्तेष्वाभ्युदयिकादिश्राद्धचतुष्टयं चतुर्षु भागेषु प्रशस्तमतः सति संभवे तत्रैव कर्तव्यम्। यदा(१) तु प्रशस्तमध्याह्नादिकाललाभ एकोद्दिष्टादौ न भवति तदाऽनिषिद्धसङ्गवादिकालेषु एकोद्दिष्टादिकं कर्तव्यमिति। अत एव पार्वणेऽपि अपरपक्षादावपराह्नालाभे संगवादिष्वपि कर्तव्यता। निषिद्धे काले सर्वेषामनाचरणम्। तदर्थं विवेचयति 'ऊर्ध्वं मुहूर्तात्' इति। कुतपादूर्ध्वं मुहूर्त्तचतुष्टयं मुहूर्त्तपञ्चकं च कुतपात्पूर्वमर्थादेकं मुहूर्तं कुतप एव। एतन्मुहूर्तदशकं स्वधावाचनमिष्यते। 'स्वधा वाच्यतेऽत्र' इति स्वधावाचनं श्राद्धयोग्यमित्यर्थः। प्रातर्मुहूर्तद्वयं सयाह्ने मुहूर्तत्रयमिति मुहूर्त्तपञ्चकं सर्वश्राद्धेषु निषिद्धम्। मनुः—

रात्रौ श्राद्धं न कुर्वीत राक्षसी कीर्तिता हि सा।
सन्ध्ययोरुभयोश्चैव सूर्ये चैवाचिरोदिते॥

'अचिरोदिते' इति दिवोपक्रमे मुहूर्तद्वयमित्यर्थः।

---

(१) 'त्यक्तं' क० ख०।

विष्णुः—

सन्ध्यारात्र्योर्न कर्तव्यं श्राद्धं खलु विचक्षणैः ।
तयोरपि च कर्तव्यं यदि स्याद्राहुदर्शनम् ॥

यमः—

स्नानं दानं तथा श्राद्धमनन्तं राहुदर्शने ।
आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्जयेत् ॥

एतेनान्यत्रापि तत्कालिकश्राद्धनिमित्ते पुत्रजन्मादौ सति सर्वदैव श्राद्धं कर्तव्यमित्युक्तं भवति । एवं चानग्नेरावश्यकश्राद्धनिमित्तानि अमावस्याः सर्वाः, चतस्रोऽष्टका, माघीश्रावण्याग्रहायण्यः पूर्णिमास्तिस्रः, आश्विनकृष्णपक्षस्तत्पक्षीयत्रयोदशी, गजच्छाया, चन्द्रसूर्यग्रहणं, व्रीहिण्यपाकौ, तीर्थप्राप्तिः, आर्द्रानक्षत्रावस्थितिः सूर्यस्य, नवान्नभक्षणमाभ्युदयिकश्राद्धनिमित्तानि च । एषु श्राद्धमावश्यकम् । अकरणेऽनिष्टोपदेशादिति । श्राद्धे प्रशस्तो देशो गङ्गातीरादिः । निषिद्धस्तु देशः महानद्युत्तरमगधदक्षिणद्वादशयोजनावच्छिन्नत्रिशङ्कुदेशः, कलिङ्गदेशः, म्लेच्छदेशः, शर्करादिसंकीर्णदेशः ।

अथ श्राद्धे प्रशस्तब्राह्मणाः-त्रिदण्डी, यतिः, आत्मवित्, वेदवित्, वेदाङ्गवित्, वानप्रस्थः, ब्रह्मचारी, असगोत्रः, साधुगृहस्थः, याज्ञिकः, पुराणवेत्ता, श्राद्धकर्मवित्, विष्णुशिवसूर्यान्यतमभक्तः, असमानप्रवरः, पितृभक्तः, श्वशुरः, दौहित्रः, गुरुः, आचार्यः, जामाता, ऋत्विक्, मातृष्वस्रेयः, पितृष्वस्रेयः, मातामहः, मातुलः, भागिनेयः, अष्टवर्षपरिणीतासुता, पङ्क्तिपावनः, गायत्रीमात्रसारोऽपि सदाचारः ।

अथ श्राद्धे निषिद्धब्राह्मणाः–'नामन्त्रयत्' इत्यनुवृत्तौ कात्यायनः–"द्विर्नग्नशुक्लविक्लिधिश्यावदन्तविद्धप्रजननव्याधितव्याङ्गिश्वित्रिकुष्ठिकुनखिवर्जम्" इति । द्विर्नग्नो दुश्चर्मा । शुक्लोऽत्रातिगौरः । विक्लिधिर्विचर्चिकायुतः । शुक्लविक्लिधिः शुक्लाण्ड इति स्मृतिरत्नविवेकः । श्यावदन्तो जन्मनैव कृष्णदन्तः । विद्धप्रजननाऽच्छिन्नमेढ्रचर्मा । एवम्–मित्रम्, शत्रुः, मूर्खः, ग्रामयाजकः, देवलकः, चिकित्सकः–क्रयविक्रयोपजीवी, ग्रामप्रेष्यः, राजप्रेष्यः, गुरुविरोधि, नक्षत्रग्रहसूचकः, त्यक्ताग्निः, वार्धुषिकः, यक्ष्मी, पशुपालकः, परिवेत्ता, परिवित्तिः, निराकृतिः, नर्तनशीलः, अवकीर्णी, वृषलीपतिः ।

वन्ध्या तु वृषली ज्ञेया वृषली तु मृतप्रजा ।
अपरा वृषली ज्ञेया कुमारी या रजस्वला ॥

पौनर्भवः, काणः, गृहावस्थितव्यभिचारिणीस्त्रीपतिः, शूद्रशिष्यः, अभिशस्तः, कुण्डः, गोलकः, पतितसंसर्गी, अव्रती, क्लीबः, योनिदोषवान्, (१)दिधिषूपतिः, पुत्रपाठितः, शूद्रापतिः, स्त्रीजितः, दुष्कुलातीतकर्णः, शिल्पजीवि, स्त्रीयाजकः, पतितः, श्वक्रीडी, दुराचारः, ऐन्द्रजालिकः, पारदारिकः, अजपी, मातृत्यागी, पितृत्यागी, दारत्यागी, चटकपोषकः अकृतविवाहः, नास्तिकः, कृपणः, असत्यवादी, ऋणहर्ता, सर्वथाकेशशून्यशिरस्कः, स्त्रीतुल्यवाक्चेष्टः, स्वाश्रमविच्युतः, पर्याहितः, पर्याधाता ।

---

(१) भ्रातुर्मृतस्य भार्यायां योऽनुरज्येत्सकामतः ।
धर्मेणापि नियुक्तायां स ज्ञेयो दिधिषूपतिः ॥

सोदर्ये तिष्ठति ज्येष्ठे ह्यग्न्याधानं करोति हि ।
तयोः पर्याहितो ज्येष्ठः पर्याधाता कनिष्ठकः ॥

अग्न्युत्सादकः, अरण्यदाही, आवसथदाही, क्षेत्रसस्यदाही आगारदाही, सदा व्यसनशीलः रक्तकेशः ।

नपुंसकभेदाः—

षण्ढको वातजः षण्ढः क्लीबोऽप्यथ नपुंसकः ।
कीलकश्चेति षड्धाऽयं क्लीबभेदो विभावितः ॥

शूद्रयाजकः, वान्ताशी, राजकारितपापचिह्नाङ्कितः, वेश्यापतिः, युद्धाचार्य्यः, स्रोतोभेदकः, वृक्षारोपणशीलः, कन्यादूषकः, हिंस्रः, वृषलवृत्तिः, सदा याजकः, श्लीपदी, कूटसाक्षी, गणयाजकः, सूत्रधारादिः, धर्मकृत्ये भग्नोत्साहः, हीनातिरिक्ताङ्गः, साहसिकः, चौरिकः, कपटतुलाव्यवहारी, आत्मम्भरिः पुंस्त्वोपघाती, कृत्याभिचारशीलः, दत्तापलापी, समयभेदकः, पक्षिघाती, मीनघाती, सर्पघाती, कच्छपघाती, नानाजन्तुवधासक्तश्च, वधबन्धोपजीवी, शूद्रप्रेष्यः, मांसविक्रयी, गरदः, कुण्डाशी, श्येनक्रीडी, समुद्रयायी, चारणवृत्त्युपजीवी, मद्यपः, रसविक्रयी, केकरः, धनुष्कर्त्ता, शरकर्ता, मित्रध्रुक् , द्यूतवृत्तिः, भृतकाध्यापकः, पित्राविवदमानः, दूतः, नित्यं याचकः, काण्डपृष्ठः ।

स्वकुलं पृष्ठतः कृत्वा यो वै परकुलं व्रजेत् ।
तेन दुश्चारितेनासौ काण्डपृष्ठ इति स्मृतः ॥

उन्मत्तः, गण्डमाली, वेदनिन्दकः, उष्ट्रदमकः, गोदमकः, दन्तिदमकः श्मश्रुकालेऽप्यजातश्मश्रुः, गलरोगी, छिन्नाङ्गः, धर्म-

विक्रयी, अश्वविक्रयी, गजविक्रयी, गोविक्रयी, लवणविक्रयी, सोमविक्रयी, लाक्षाविक्रयी, चामरविक्रयी, पूर्वदिने कृतस्त्रीसङ्गमः, पुत्रिकापतिः, रजस्वलास्त्रीकः, एककूपोदके ग्रामे संवत्सरवासी, अन्धः, बधिरः, पाण्डुरोगी, दण्डाधिकृतः, अशुचिः, राजद्विष्टः, पुरोहितः, अनूढापुत्रः, अनूढापुत्रपुत्रः, अनूढापतिः, अनुपासितसन्ध्यः, अष्टौ पापरोगिणः 'उन्मादस्त्वग्दोषो राजयक्ष्माश्वासो मधुमेहो भगन्दरो महोदरमश्मरीत्यष्टौ पापरोगाः ।

अथ श्राद्धे प्रशस्तकुशाः—दक्षिणादिगवस्थितदक्षिणावनत(१) गोकर्णदीर्घाः, समूलाग्राः हरिताः, श्राद्धदिवसे स्वयं प्रातरुत्पाटिताः, पिण्डभूस्तरणे उपमूलसकृल्लूनाः, श्राद्धकर्तृबद्धमुष्टिहस्तमिताः । योग्यदेशस्थकुशाभावे मुञ्जश्यामाकदूर्वाकाशबल्वजाः तीक्ष्णरोमाश्च ।

अथ श्राद्धे निषिद्धकुशाः—चिताजाताः, वर्त्मजाताः, यज्ञविनियुक्तस्तरणविनियुक्तासनविनियुक्तपिण्डविनियुक्तपितृतर्पणविनियुक्तामेध्यलिप्तनीलीक्षेत्रजातकार्पासक्षेत्रजाताः ।

अथ श्राद्धे तिलाः—श्यामः प्रशस्ताः । श्वेता निषिद्धाः । श्राद्धे निषिद्धजलम्-दुर्गन्धिजलम् , स्वल्पजलाशयजलम् , पर्युषितजलम् , अशुच्युच्छिष्टस्पृष्टोद्धृतजलम् , अन्त्यजजलाशयजलम् , अनुत्सृष्टपरखातजलाशयजलम् , अभोज्यनिपानजलम् , पतितादिकारितखातजलम् , तर्पणे दर्भपत्रतिलहेमरजतान्यतमरहितं जलं निषिद्धम् ।

(१) गोकर्णलक्षणं हैमकोशे—
प्रदेशिन्यादिभिः सार्द्धमङ्गुष्ठे वितते सति ।
प्रादेशतालगोकर्णं वितस्तिश्च यथाक्रमम् ॥ इति ।

अथ श्राद्धेऽर्घपात्राणि—सौवर्णराजतताम्रमयखड्गपात्रमणिमयपात्राणि त्रैवर्णिकनिर्मितानि, पालाशादियज्ञियवृक्षपात्राणि पत्रपुटकानि च। एतान्येव परिवेषणे भोजनार्थे च पात्राणि प्रशस्तानि।

अथ भोजने परिवेषणे च निषिद्धानि पात्राणि—सीसकमयायोमयपाषाणमयभग्नपात्रक्षुद्रपात्राणि। दैवे राजतानि, भोजने मृन्मयपात्रम्।

अथ श्राद्धे गन्धादिपञ्चकम्। तत्र गन्धाः—श्वेतचन्दनाऽगुरुकृष्णागुरुगुडत्वक्कुङ्कुमकर्पूरपद्मकाष्ठोशीरकुटजजटामांस्यः। गन्धिशण्ं सुगन्धिद्रव्यमेतत्। न तु तुलस्यनुकारी उग्रगन्धो वृक्षः। सिन्दुवारः निषिद्धगन्धाः कस्तूरीसिल्हकादीनि।

अथ पुष्पाणि विहितानि—पद्मनीलोत्पलरक्तोत्पलकुमुदचम्पकतिलकतगरयूथिकामाधवीकुन्दकुब्जकानवमालिकासेवन्तीकह्लारतुलसीपत्राणि। निषिद्धेतरश्वेतपुष्पाणि।

अथ निषिद्धपुष्पाणि अर्कभाण्डीपीताम्लानकृमिकेशादिदुष्टानि उग्रगन्धीनि रक्तवर्णाण्डूपुष्परक्तकरवीरश्वेतसुगन्धिकुसुमेतरकण्टकिवृक्षपुष्पचैत्यवृक्षोद्भवपुष्पाणि (निषिद्धानि)।

अथ श्राद्धे धूपद्रव्याणि—सघृतगुग्गुलसमधुगुग्गुलचन्दनाऽगरूशीरपद्मकाष्ठकर्पूरश्रीखण्डाः। तदभावे देवदारुसरलाद्यपि।

अथ निषिद्धधूपाः—केवलघृतम्, केवलगुग्गुलः, तृणगुग्गुलः, उग्रगन्ध्यगन्ध्यशुचिसंबद्धानि प्राणिजं च कस्तूरिकादि।

दीपे गोघृतं तिलतैलं च विहितम्। तदभावे सर्षपादिस्नेहः। प्राणिजस्नेहो दीपे निषिद्धः।

श्राद्धे वस्त्रम्—नवमनङ्गलग्नम्, शुभ्रम्, सदसं देयम् । संपत्तौ सत्यां वासोयुगं त्रिपटं वा । धौतकौशेयकम्बलादिदानमधिकफलम् । उपवीतमधिकफलार्थमत्यावश्यकम् । ताम्बूलादीनि श्रेष्ठतमवस्तूनि गन्धदानाद्यवसरे दातव्यानि । ताम्बूलोपकरणानि—पर्णपूगखदिरचूर्णखदिरसारकर्पूरश्रीखण्डकस्तूर्येलाकङ्कोललवङ्गसहकारिद्रव्याणि । अत्र कर्पूरादीनि पृथगपि देयानि ।

अथ श्राद्धदेशे सन्निधापनीयानि—गण्डकश्रृङ्गपात्रश्वेतरक्तनेपालकम्बलकृष्णाजिनगौरसर्षपगौरकृष्णारण्यत्रिविधतिलात्रिदण्डियतिरजताक्षतकृष्णच्छागाः । एतानि श्राद्धं पुनन्ति ।

अथ श्राद्धदेशापसारणीयानि—काककुक्कुरकुक्कुटविड्वराहबिडालवृषलवृषलीपातिखञ्जषण्ढाः, रजस्वला, त्रुटितकर्णी, पातितः, कुष्ठी, व्रणी, नास्तिकः, भयानकः, अशुचिः, नग्नः, धूर्तः, नीलकषायवस्त्रः, छिन्नकर्णः, लोहः, सीसम्, मलिनाम्बरः, दीर्घरोगी, अभिशस्तः, ऊनाङ्गः, अधिकाङ्गः, काणः, दातृप्रैष्यः, मद्यपः, भगिनीपतिः, नागः, नकुलः, असती, चाण्डालः, पाखण्डः, पर्युषितान्नमिति । एतेषां काकादीनामन्यतमदृष्ट्युपहतश्राद्धहविषां त्यागः । हविरन्तराऽसंभवे तेष्वेव हविष्षु मृद्युक्ताभिरद्भिः प्रोक्षणम्, तिलगौरसर्षपविकिरणं कृत्वा तैरेव हविर्भिः श्राद्धं कर्त्तव्यम् । मातृपितृवंशासंबद्धा स्त्री पाकादिकर्मानुकूलव्यापारे निषिद्धा ।

अथ श्राद्धे विहितानि हविर्द्रव्याणि । तत्र—दुग्धदधिघृतानि गव्यानि, गव्यपायसातिलतण्डुलमुद्गसाधितकृसरान्नम्, अपू-

पादिः, शर्करासीरसंयुक्ताः पृथुकाः, मध्वाक्तलाजाः, तिलव्री-
हियवाश्चेति । शालिसमुत्पन्नधान्याः—प्रसातिका । प्रसातिका
नीवारविशेष इति हलायुधः । प्रसातिका मध्यदेशे 'शाटी(?)
ला' इति प्रसिद्धाः धान्याः । 'चतुर्वर्णानामेव श्वेता पीता रक्ता
कृष्णा च' इति श्राद्धपल्लवाः । मागधे देशे प्रसिद्धेयं षष्टिका ।
अत्र आशुधान्यं शुक्लं श्राद्धे प्रयुज्यते । 'ग्राम्याभिरोषधीभिर्मासं
प्रीयन्त' इति सामान्यतो विधानात् । विशेषानिषेधात् । किञ्च
छन्दोगपरिशिष्टटीकायां शारदं धान्यं षष्टिकादि' इत्या(अत्रा)दि-
पदेनास्यैव सङ्ग्रहः । कृष्णामाषा, मुद्गगोधूमश्यामाकनीवारक-
लायकङ्गुवंशबीजानि ।

अथ(१)मांसानि—गण्डकमांसविषाणसमयानुत्थितशृङ्गच्छा-
गमांससर्वलोहितच्छागमांसगोधामांसहरिणविचित्रहरिणकृष्णह-
रिणशम्बरमृगमेषशशककूर्मारण्यवराहमांसानि, तित्तिरिलावकव-
र्त्तकीशल्लकीक्रकराः एषां पक्षिणां मांसानि । क्रकरः—करात
इति प्रसिद्धः । वार्ध्रीणसमांसम् ।

त्रिपिबं त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम् ।
वार्ध्रीणसं तु तं प्राहुर्याज्ञिकाः पितृकर्माणि ॥
कृष्णग्रीवो रक्तशिराः श्वेतपक्षो विहङ्गमः ।
स वै वार्ध्रीणसः प्रोक्त इत्येषा नैगमी श्रुतिः ॥

छागपक्षिणौ वार्ध्रीणसौ तयोर्मांसं मन्त्रसंस्कृतमांसम् ।

(१) "सहान्नेनोत्तरास्तर्पयन्ति" इति श्राद्धकल्पीयगृह्यसूत्रदर्श-
नादन्नेन सहैवमांस श्राद्धे प्रदेयम् । केवलन्तु पलपैतृकतया तत्र २
कलौ संन्यासादिना सह निषिद्धम्

यदा छागादिकं पशुमालभ्य मांसमुपादीयते तदा प्रथमं मन्त्रेण पशुप्रोक्षणं कर्त्तव्यम्। मन्त्रश्च—

ॐ पितृभ्यस्त्वा जुष्टं प्रोक्षामि।

एकोद्दिष्टे तु 'पित्रे त्वा जुष्टं प्रोक्षामि' इत्यादिरूपः। अनालम्भपक्षे सिंहादिहतमांसादिषु न मन्त्रसंस्कारापेक्षेति। सिंहव्याघ्रहतहरिणमांसं, लब्धक्रीतच्छागादिमांसम्, प्रस्तराद्यभिघातमृतच्छागादिमांसम्।

अथ मत्स्याः—महाशल्करोहितराजीवपाठीनश्वेतशल्काः। अन्येऽपि। अथ शाकाः—

कालशाकं च वास्तूकं मूलकं कृष्णनाडिका।
वेत्राङ्कुरं कलायं च पटोलं सार्षपं तथा॥
सूर्यावर्त्तं सुनिष्पन्नं शाकान्याहुर्मनीषिणः।

कृष्णनाडिका कृष्णनाडी च इति श्राद्धपल्लवश्राद्धपङ्क्त्यौ। सूर्यावर्त्तं 'हुरहुर' इति प्रसिद्धम्। सुनिष्पन्नमम्लोनिकाकषायपत्रसदृशपत्रचौपत्तीतिप्रसिद्धम्। जलप्रभवशाकं, पट्टुनाडीशाकञ्च, वाक्यान्तरात्।

अथ फलानि—आम्रपनसकदलीनालिकेरामलकीप्राचीनामलकीपद्मवीजखर्जूरतिन्दुककण्टकारिकाद्राक्षाक्रमुकना(ग)रङ्गकुवलीदाडिमदाडिमीबिल्वाम्रातकलकुचबदरीद्वयपूगफलपटोलबीजपूरकक्षीरिकात्रापुषपरूषकशृङ्गाटकमधूकगम्भारीफलपिप्पलीमरिचकोविदारजलजम्बूनि। यानि फलानि पक्कानि भक्ष्याणि तान्ययत्नपक्कानि देयानि। मधूकपुष्पं कोशकरीरभेदाः। तद्विकाराश्च गुडशर्करादयः। अन्यान्यपि निषिद्धेतरस्वादुमधुर-

फलानि कर्कटीप्रभृतीनि श्राद्धे देयानि। फलान्ययत्नपक्वानि देयानि।

अथ कन्दाः—सूरणः, दीर्घमूलकम्, कसेरु, बिशं—द्विप्रकारं सर्वे शालूकभेदाः। आर्द्रकम्, विदारीकन्द इति प्रसिद्धः। तालमूली, शतावरी, कन्देषु यथा यदभ्यवहरणीयं भवति तथा कृत्वा दातव्यं तदिति।

अथ व्यञ्जनसंस्कारकद्रव्याणि—हिङ्गुजीरकधान्यकहरिद्राशुण्ठीमरिचार्द्रकदाडिमीदाडिमीबीजघृततैलानि।

अथ लवणानि—सामुद्रिकसाम्भरिसैन्धवानि। तैलं तिलभवं सार्षपं च। अत्र (१)च मांसादीनी व्यञ्जनान्युपकरणानि चामान्नश्राद्धे आमान्येव दातव्यानि, सिद्धान्नश्राद्धे सिद्धान्येव दातव्यानीति श्राद्धपल्लवः। सक्तुलाजचिपिटकदुग्धविकारदधिदुग्धघृतगुडखण्डलड्डुकादिपक्वान्नानि चाऽग्निसाधितान्यप्यामश्राद्धे देयानीति श्राद्धपल्लवश्राद्धप्रदीपौ। अत्र च—

कालशाकं महाशल्काः खड्गलोहामिषं मधु।
आनन्त्यायैव कल्पन्ते मुन्यन्नानि च सर्वशः॥

कालशाकं प्रसिद्धम्। महाशल्का—रोहितप्रभृतयोमत्स्याः। खड्गो—गण्डकः। लोहः—सर्वलोहितच्छागः। तयोर्मांसम्। मधु—क्षौद्रम्। मुन्यन्नानि—नीवाराः। एतैः श्राद्धमनन्तपितृतृप्तिजनकम्।

शर्कराक्षीरसंयुक्ताः पृथुका नित्यमक्षयाः।

एतैः श्राद्धमक्षयपितृतृप्तिजनकम्। लाजांश्च मधुरसंयुक्ता-

(१) 'च' ना० क० ख०।

न्सक्तून्शर्करया सह श्राद्धे दद्यात्। अत्र विहितद्रव्याणां श्राद्धे दाने तत्फलेच्छायां समुच्चयो न तु विकल्पः।

भक्ष्यं भोज्यं च विविधं मूलानि च फलानि च।
हृद्यानि चैव मांसानि पानानि सुरभीणि च॥
उपनेयं सर्वमेतत्' इति मनुवचनात्।
ततोऽन्नं बहुसंस्कारं नैकव्यञ्जनपानवत्।
चोष्यपेयसमृद्धं च यथावदुपपादयेत्॥

इति देवलवाक्याच्च, समुच्चयविधानात्। 'नैकव्यञ्जनपानवत्' इत्यपि अनेकव्यञ्जनविधानं न त्वेकव्यञ्जननिषेधः। वाक्यभेदप्रसङ्गात्। तस्मादनेकव्यञ्जनस्य प्राशस्त्यम्। एकव्यञ्जनस्यानिषेधात्। अनेकव्यञ्जनस्यालाभेऽनिषिद्धत्वादेकमपि व्यञ्जनमुपादेयमिति। विहितद्रव्येषु एकद्रव्यदानेनापि श्राद्धस्वरूपनिर्वाहः।

अथ श्राद्धे विहिताऽनिषिद्धद्रव्याणि—पञ्चबिल्वहिङ्गुपिप्पलीशृङ्गाटकदधिसक्तुश्वेतसिम्बिकेमुकमधुकमरिचानि। अत्र हिङ्गुपिप्पलीमरिचानि द्रव्यान्तरसंस्कारार्थं देयानि केवलानि न देयानि। परिशिष्टानि विहितालाभे देयानि।

अथ श्राद्धे निषिद्धद्रव्याणि—केवलजलवारद्वयसाधितमुद्गाद्यन्नरूपं, द्विःस्विन्नमुपभुक्ताग्रभागरूपाग्रावलेहितं, शुष्कपर्युषितपरिदग्धसशर्करम्, सकीटपाषाणकेशोपहतवाग्दुष्टभावदुष्टदुष्टोपहत श्वासोपहतवसोऽवधूतम्। एतानि विहितद्रव्याण्यपि निषिद्धानि। विषहतमांसछद्महतमांसव्याधिहतमांससिंहव्याघ्रेतरातिर्यग्घतमांसमन्त्राप्रोक्षितालब्धपशुमांसम्। महिषीक्षीरहारिणीक्षीरमेषीक्षीरोष्ट्री-

क्षीरच्छागीक्षीरचमरीक्षीरैकशफीक्षीराणि । प्रशस्तमपि 'श्राद्धार्थं मे प्रयच्छस्व' इति याचितदुग्धमुद्धृतसारं च दुग्धं निषिद्धम् । निषिद्धदुग्धविकाराश्च दध्यादयोऽपि निषिद्धाः । दुर्गन्धिजलं, स्वल्पजलाशयजलं, पर्युषितजलम् , अशुचिस्पृष्टजलम् , अन्त्यजजलाशयजलम् अप्रतिष्ठितजलाशयजलम् , याचितजलम् , दर्भमन्त्रतिलहेमरजतान्यतमरहितजलम् , अभोज्यान्ननिखातजलम्, पतितादिकारितजलाशयजलम् ; शूद्राहृतजलम् , रात्र्याहृतजलम् । ऊषरलवणम् , कृतलवणम् , सौवर्चललवणम् , अलवणव्यञ्जनम्, पाकानन्तरप्रक्षिप्तलवणव्यञ्जनम् , हस्तदत्तव्यञ्जनम्, हस्तमथितद्रव्यम् , शूद्रस्पृष्टद्रव्यमश्रुदुष्टद्रव्यम् , छिक्कादुष्टद्रव्यम् , रसहीनद्रव्यम , गन्धहीनद्रव्यम् , पालङ्कीशाकम् , श्वेतनाडिकाशाकम्, शोभाञ्जनशाकम् , तण्डुलीयकशाकम् । 'तण्डुलीयकडरिस्तया' इति श्राद्धपल्लवः । खचरीशाकम् , पिप्पलीशाकम् , रायीशाकम् , त्रोटीशाकम् , कुसुम्भशाकम् , तुलसीशाकम्, (१)शोणशाकम्, मरिचशाकम्, पोयीशाकम्, नाडिकाशाकम् । नाडिका फुलु(ल)यी यूष्मा इति श्राद्धपल्लवे व्याख्याता। फुलुयी (यूष्मा) मगधादिदेशे 'वनयोरिय' तुल्यलता आषाढादौ लगति । कूष्माण्डम् , अलाबु, सिम्बि, सोन्धयकावुन्तकमञ्जिरिणम् , पिण्डमूलकम् , वंशकरीरम् , कोद्रवम् , वनकोद्रवम्, चणकम् , बोडा, अकुठापुलाकधान्यम् , अतसी, गौरमाषः, मसूरः, लशुनम् , लोहितं वृक्षनिर्यासम् , पलाण्डुकठच्छातिकपित्थम् , काकजङ्घा, केवलशुण्ठी, केवलमरिचम् , केवलहिङ्गु,

(१) 'शणीशाकम्' इत्यपिपाठः ।

ब्राह्मणयष्टिका(भवनेठी), फरहदः, धत्तूरः, कवकम् , वासकः, स्थूलकेमुकम् , स्थूलजम्बूफलम् , कुम्भी । चाण्डालाग्निसूतकाग्न्यमेध्याग्निचिताग्नयः श्राद्धे निषिद्धाः । अग्न्यन्तराभावेऽपवित्रानेतानग्नीन् क्रमेण सप्तसु स्थानेषु परंपरया प्रज्वाल्य सप्तमस्थानप्रज्वलितोऽग्निरुपादेयः । अत्र च श्राद्धे चतुर्विधानि वस्तूनि भवन्ति—विहितानि, विहितानिषिद्धानि, अविहिताऽनिषिद्धानि, निषिद्धानि चेति । विहितलाभे तेषामेवोपादानम् । तदलाभे विहितानिषिद्धानामुपादानम् । तदलाभेऽविहितानिषिद्धानामुपादानम् । निषिद्धस्य सर्वथा त्यागः ।

इति श्राद्धविवेक प्रथमः परिच्छेदः ॥ १ ॥

---

## अथ द्वितीयः परिच्छेदः ।

अथाधिकारिनिरूपणम्—तत्र मूलवाक्यानि शुद्धिविवेके लिखितानि समपञ्चम् । इह विस्तरभयादधिकारिमात्रं सिद्धवल्लिख्यते । मृतस्य त्रिविधा क्रिया भवति—प्रथमा मध्यमोत्तमा चेति । तत्र दाहमारभ्याशौचान्तदिनपर्यन्ता क्रिया पूर्वा । एकादशाहादिसपिण्डनान्ता मध्यमा क्रिया । सपिण्डनानन्तरं सांवत्सरिकपार्वणाभ्युदयिकनित्यश्राद्धादिरूपोत्तरा क्रिया । तत्र त्रिविधास्वपि क्रियासु त्रयोदशविधानामपि पुत्राणामधिकारः । ते च त्रयोदश पुत्राः—औरसः १, पुत्रिकापुत्रः २, क्षेत्रजः ३, कानीनः ४, सहोढजः ५, गूढोत्पन्नः ६, पौनर्भवः ७, अपविद्धः ८, दत्तकः ९, क्रीतः १०, कृत्रिमः ११, स्व-

यमुपागतः १२, पारशवः १३ । तेषु मुख्य औरसः । तदभावे पुत्रिकापुत्रः । ततः पूर्वपूर्वाभावे उत्तरोत्तरोऽधिकारी । तेष्वपि पूर्वक्रियायां मध्यमक्रियायाञ्च विभक्तानामविभक्तानां वा मध्ये योग्यस्य ज्येष्ठस्यैवाधिकारः । (१) ( तदुक्तं स्मृतिसारे—

अकृतेऽपि कृते वापि कनिष्ठादिभिरौरसैः ।
यत्र कुत्राऽपि ज्येष्ठस्याधिकारः प्रेतकर्मणि ॥ इति ।)

तस्य क्षतादिना प्रतिबन्धे कनिष्ठस्यापि नियतकालकर्तव्यदशाहादिकप्रेतपिण्डादिसपिण्डनान्तक्रियास्वप्यधिकारः। सपिण्डनोत्तरं सर्वेषां पुत्राणामविशेषेण पृथक्पृथगधिकार उत्तराक्रियासु। एषां त्रयोदशविधानां पुत्राणां लक्षणं शुद्धिविवेके प्रपञ्चितम् । पुत्राभावे पौत्रः । पौत्राभावे प्रपौत्रः । तदभावे भार्या । तदभावे भ्राता कनीयान् । तदभावे ज्येष्ठः । तदभावे पिता । तदभावे भ्रातृपुत्रः । तदभावे पूर्वक्रियायां मध्यमाक्रियायां च सपिण्डा अधिकारिणः । तदभावे दुहिताऽधिकारिणी । तदभावे सकुल्याः । तदभावे मातृसपिण्डाः । तदभावे मातृसकुल्याः (२) । कुलद्वयाभावे मातरः । तदभावे यथाकथञ्चित्परिगृहीताः स्त्रियः । तदभावे राजाऽऽदेशेन धनग्राहकोऽधिकारी । पितृहीनौ पौत्रप्रपौत्रौ सपुत्रयोरपि पितामहप्रपितामहयोः पार्वणश्राद्धेऽधिकारिणौ । मृतस्य कन्याया विवाहे कन्याप्रदाताऽप्यधिकारी । असमाप्तषड्वर्षस्य मृतस्य पूर्वक्रियामात्रम् । तत्र भ्रातृपित्रादयोऽधिकारिणः । असमाप्तद्विवर्षस्य पूर्वक्रियाऽपि नास्ति किन्तु भूमिनि-

---

( १ ) कंसान्तर्गतं नास्ति क० ख० ग० ।
( २ ) 'तदभावे दुहितापुत्रः' ख० ।

खननमात्रम्। स्त्रिया अपि द्विवर्षाभ्यन्तरे भूमिनिखननमात्रम्। तत ऊर्ध्वं विवाहात्पूर्वं पूर्वक्रियामात्रम्। तत्र पिता अधिकारी। तदभावे भ्रात्रादिः। ऊढायास्तु त्रिविधापि क्रिया। तत्र पुत्रोऽधिकारी। तदभावे पतिः। तदभावे सपत्नीपुत्रः। तदभावे पौत्रः। तदभावे प्रपौत्रः। तदभावे सपिण्डाः। तदभावे सकुल्याः। तदभावे पितृसापिण्डाः सप्तपुरुषावधयः। सापिण्डाः दशपुरुषावधयः सकुल्याः। शूद्रस्यापरिणीतस्य द्विवर्षादूर्ध्वं पूर्वक्रियामात्रम्। तत्र भ्रात्रादिरधिकारी। परिणीतस्य त्रिविधाऽपि क्रिया। तत्र पुत्रादिरधिकारी पूर्ववत्। केचित्त्वसमाप्तषड्वर्षस्य त्रैवर्णिकस्य स्त्रीशूद्रयोश्चापरिणीतयोस्त्रिविधाऽपि क्रियानुग्रहादिना न त्वावश्यकीत्याहुः इति श्राद्धकल्पस्मृतिसारौ। गुरुकुलस्थितशिष्यस्य भ्रातृपित्रभावे गुरुराधिकारी। गुरोरपि पुत्रपत्नीभातृपितृहीनस्य शिष्यः। यजमानस्यान्याभावे ऋत्विगिति। संन्यासिनः संन्यासिपुत्रा अधिकारिणः। संन्यासिपुत्रैः पितुः सांवत्सरिकैकोद्दिष्टपार्वणाभ्युदयिकतीर्थश्राद्धादीनि कर्तव्यानि। सामान्यविहितानामेषामेकोद्दिष्टादीनां संन्यासिपुत्रं प्रतिकर्तव्यतानिषेधकप्रमाणाभावात्। यत्तु—

एकोद्दिष्टं न कुर्वीत यतीनां चैव सर्वदा।
अहन्येकादशे प्राप्ते पार्वणं तु विधीयते॥

इति वाक्यम्। तत्तु न सांवत्सरिकैकोद्दिष्टश्राद्धनिषेधकम्। एतद्वाक्यस्य पारिजातनिबन्धादिषु सपिण्डीकरणपर्यन्तैकोद्दिष्टप्रकरणे लिखनेन प्रेतोद्देश्यकषोडशश्राद्धनिषेधकत्वव्यवस्थितेः। 'त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते' इत्युपसंहाराच्च।

एकोद्दिष्टं यतेर्नास्ति त्रिदण्डग्रहणादिह ।
सपिण्डीकरणाभावात्पार्वणं श्राद्धमिष्यते ॥

इति शातातपवाक्ये त्रिदण्डग्रहणहेतुकसपिण्डीकरणाभावस्यैकोद्दिष्टनिषेधहेतुत्वेनाभिधानाच्च । किञ्च—

एकोद्दिष्टं जलं पिण्डमशौचं प्रेतसत्क्रियाम् ।
न कुर्याद्वार्षिकादन्यद् ब्रह्मीभूताय भिक्षवे ॥

इति दत्तात्रेयवाक्ये वार्षिकैकोद्दिष्टनिषेधानवगमात् कतिपयानां सांवत्सरिकैकोद्दिष्टाचरणाच्च । कतिपयानामनाचरणस्य प्रकरणानवरुद्धैकोद्दिष्टनिषेधानवगममात्रेणान्यथोपपत्तेर्न सामान्यैकोद्दिष्टनिषेधोऽवगम्यत इति । तत्रैकोद्दिष्टं सामान्योक्तैकोद्दिष्टविधिनैव कर्तव्यम् । विध्यन्तरानुपदेशात् । सर्वैश्च संन्यासिपुत्रैः कर्तव्यम् तत्रापि विशेषाश्रवणादिति । अतएव पार्वणाभ्युदयिकतीर्थश्राद्धादिकं यतिपुत्रैः कर्तव्यमेवेतिश्राद्धपल्लवे लिखितम् । यतेः सपिण्डीकरणान्ता क्रिया सर्वैरेव निषिद्धेति श्रीदत्तोपाध्यायलिखनं स्मृतिसारलिखनं च । एकोद्दिष्टकर्तव्यतानिषेधकवाक्यस्य प्रेतोद्देश्यकैकोद्दिष्टकर्तव्यतानिषेधपरत्वं सर्वत्र स्मृतिसारादावप्यवगम्यते सन्दर्भादिति । यत्तु—

ब्राह्मणादिहते ताते पतिते सङ्गवर्जिते ।
व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ ॥

इति वाक्यं तदपि न त्रिदण्डिसंन्यासिपार्वणश्राद्धनिषेधकम् । एतद्वाक्यस्यैकदण्डिसंन्यासिपार्वणश्राद्धनिषेधकत्वात् । उशनोवाक्येन त्रिदण्डिनां पार्वणविधानादिति गौडीयश्राद्धविवेकः । शातातपवाक्ये नापि पार्वणविधानात् । वस्तुतो ब्राह्म-

णादिहतत्त्वादीनि पितामहप्रक्रमश्राद्धविधायकानि। तेन 'पतिते सङ्गवर्जिते' च जीवत्येव पितरि पार्वणविधायकम्। सङ्गवर्जितः संन्यासी।

अथानधिकारिणः—महापातकिनः, पाखण्डवृत्तयः, स्तेनाः, व्रात्याः, आलस्यादश्रद्धया वा स्वकर्मत्यागिनः, निन्दितकर्मकर्तारः, गर्भभर्तृद्रुहः स्त्रियः, मद्यपास्त्रैवर्णिकस्त्रियः, ब्रह्मचारिणः। मातापित्रोराचार्यगुरूपाध्यायानामन्याभावे वहनदहनादौ ब्रह्मचारिणो दोषो न भवति।

अथोदकदानाद्यनर्हाः—अयथाविधिसङ्करजाता, वेदाविहितप्रव्रज्याकर्तारः, शास्त्राविहितमार्गेण देहत्यागकारिणः, पाखण्डाश्रिताः, स्त्रियोगर्भभर्तृद्रुहः, मद्यपास्त्रैवर्णिकस्त्रियः। वृथासङ्करजातादीनामुदकदानादि न कर्तव्यम्। प्रेतश्राद्धादावपि शर्मादिपदं प्रयोजयन्ति केचित्। केचिन्न प्रयोजयन्ति। ते तु—

सपिण्डीकरणं यावत् प्रेतः प्रेत इति स्मृतः।
सपिण्डीकरणादूर्ध्वं शर्मवर्मादिशब्दभाग्॥

इति वाक्यं प्रमाणयन्ति। तत्रास्माकमुत्तरः पक्षः।

अथ प्रथमक्रिया—अत्र गङ्गादितीर्थेषु अपक्रमिष्यज्जीवितस्य त्रैवर्णिकस्य नवयज्ञोपवीतवस्त्रमाल्यादिभिः शूद्रस्य स्त्रियाश्च यज्ञोपवीतेतरैर्विभूषणम्, कुशास्तरणावस्थानं शुचित्वापादकम्। गङ्गाजलप्रोक्षणम्, गङ्गामृत्तिकानुलेपनम्, शालग्रामशिलासन्निधापनम्, तुलसीसन्निधापनम्, शिरसि तुलसीपत्रदानञ्च कारयितव्यम्। तत्र फलार्थितया यथाशक्ति गोभूहिरण्यादिदानं तद्द्वारा कारयितव्यम्। आशुतरपापनिवारणार्थं दीपदानं कार-

यितव्यम् । जलतुषारयोरन्यतरेण शरीरार्द्रीकरणम् । तदसम्भवे जलतुषारयोः कथाऽपि कार्या । "ओमित्येकाक्षरं ब्रह्म व्याहरन्मा मनुस्मरन्" इत्युक्तेर्ब्रह्मविष्णुस्मरणयोरन्यतरस्मिन्परमगतिप्राप्तिः फलम् । अतस्तदर्थिना तत्करणं पुरुषसूक्तादिश्रावणम् । अपगतप्राणस्य मुखनिःक्षिप्तमणिप्रवालहिरण्यशकलस्य नासिकाद्वयकर्णद्वयचक्षुर्द्वयनिक्षिप्तसुवर्णशकलमात्रस्य घृततैलसमायुक्तस्य देहशोधनं विधाय स्नापितस्य बर्हिष्मत्यां भूमौ दक्षिणशिरसा स्वापितस्य घृततैलाभ्युक्षितस्य चन्दनोक्षितसर्वाङ्गस्य वस्त्रापिहितमुखस्य पुष्पैर्विभूषितस्य शुद्धवस्त्रोपवीतिनो गुरूननुज्ञाप्य पुत्रादिर्निर्हरणं कुर्यात् । मृतद्विजं सजातीयेषु तिष्ठत्सु न शूद्रा नयेयुः न मृतं शूद्रं द्विजाः । ब्राह्मणकर्तृकानाथब्राह्मणकर्मकनिर्हरणकर्तुः स्वर्लोकभागित्वं फलम् । द्विजकर्तृकानाथब्राह्मणकर्मकनिर्हरणे निर्हरणक्रियासम्बन्धिकर्तृपदसमसंख्ययज्ञफलसमं फलम् । धनञ्जयवाय्वपगमपर्यन्तमृतस्य शनैर्धारणम् । द्विजसंस्कारोपयुक्तानामग्नितृणकाष्ठहविषां शूद्रकर्तृकानयनं निषिद्धम् । द्विजशवं शूद्रो न स्पृशेत् । ततः स्नातः पुत्रादिर्दक्षिणशिरसं शवं कृत्वा—

गयादीनि च तीर्थानि ये च पुण्याः शिलोच्चयाः ।
कुरुक्षेत्रं च गङ्गां च यमुनां च सरिद्वराम् ॥
कौशिकीं चन्द्रभागां च सर्वपापप्रणाशिनीम् ।
भद्रावकाशां सरयूं गण्डकीं तमसां तथा ॥
वैष्णवं च वराहं च तीर्थं पिण्डारकं तथा ।
पृथिव्यां यानि तीर्थानि चतुरः सागरास्तथा ॥

एतानि मनसा ध्यायञ्जले सर्वतीर्थान्यावाह्य तेन जलेन शवं संस्नाप्य शुचिदेशे यथामिलितदारुचयरचितायामास्तीर्णकुशाया(१)मुत्तराशिरसोऽधोमुखस्य सवस्त्रस्य पुरुषस्य स्त्रियाश्चोत्तानदेहाया उत्तरशिरसः स्थापनं कुर्यात् । ततो 'गयादीनि च तीर्थानि ये च पुण्याः शिलोच्चया' इत्यादि पूर्वोक्तं पठित्वा 'एतानि तीर्थानि देवाश्चाग्निमुखाः सर्वे कृतस्नापनमेनं गतायुषं दहन्तु' इति मनसा ध्यात्वा(२)ऽपसव्येन दक्षिणामुखो हुताशनं गृहीत्वा—

कृत्वा सुदुष्करं कर्म जानता वाप्यजानता ।
मृत्युकालवशं प्राप्तं नरं पञ्चत्वमागतम् ॥
धर्माधर्मसमायुक्तं लोभमोहसमावृतम् ।
दहयं सर्वगात्राणि दिव्याँल्लोकान्स गच्छतु ॥

शीघ्रमिति मन्त्रमुदीर्य प्रदक्षिणं विधाय प्रज्वलदुल्मुकस्य शिरोदेशे दानम् । मन्त्रश्चायमदृष्टार्थत्वात् । स्त्रीदाहेऽप्यविकृत एव पठनीयः पुंस्त्वस्याविवक्षणात् । क्षत्रियकर्तृके वैश्यकर्तृके चानाथब्राह्मणदाहे वैश्यकर्तृकनष्टसर्वस्वानाथराजदाहे पितृमेधय-

---

(१) यद्यप्यत्र पुरुषस्य अधोमुखत्वमुत्तरशिरस्त्वं च दाहे ऽक्तम्, तथापि 'तत्रोत्तानं निपात्यैनं दक्षिणाशिरसं मुखे' इत्यादि छन्दोगपरिशिष्टवचनेन कात्यायनानुयायिनामुत्तानत्वं दक्षिणाशिरस्त्वमेव च स्वीकर्तुमुचितम् ।

(२) अत्र क्रव्यादमग्निं संस्कृत्य सव्येन क्रव्यादपूजां कृत्वा—
त्वं भूतकृज् जगद्योने त्वं लोकपरिपालकः ।
उक्तः संहारकस्तस्मादेतं स्वर्गं मृतं नय ॥
इत्यनेन प्रार्थनां कुर्यात् ।

इफलसमं फलम् । ततस्तृणकाष्ठादिषु घृतं परिक्षिप्य दग्ध्वा किंचिच्छेषयेत्(१) । ततः प्रादेशमात्रसप्तकाष्ठिकाभिः सह प्रद-क्षिणसप्तकं विधाय कुठारेणोल्मुकोपरि प्रहारसप्तकं कृत्वा क्रव्यादाय नमस्तुभ्यम्' इत्युक्त्वा एकैकां काष्ठिकामग्नौ क्षिपे-त् (२) । अनतीतद्विवर्षप्रेतं गन्धमाल्यादिभिरलङ्कृत्य—

अहरहर्नयमानो गामश्वं पुरुषं पशून् ।
वैवस्वतो न तृप्यति सुरापा इव दुर्मतिः ॥

इति यमगाथां गायन्तो बान्धवा ग्रामाद्बहिः शुचिदेशे नि-खनेयुः । तत्र नोदकदानादि ।

अथोदकदानादि—तत्र प्रेतदाहान्तरं सर्वे शवस्पृशः शवानुगमनकर्तारश्च चितां बामावर्तेन परावृत्य व्यावर्त्य प्रेत-मनवलोकयमानाः—

अहरहर्नयमानो गामश्वं पुरुषं पशून् ।
वैवस्वतो न तृप्यति सुरापा इव दुर्मतिः ॥

इति यमगाथां गायन्तो नदीप्रवाहाऽजलाशयान्तरं वा बालानग्रे कृत्वा गच्छेयुः । ततः श्यालकमन्यं बा याचेरन् 'उदकं करिष्यामहे' इति । स ब्रूयात् 'कुरुध्वं माचैवं पुन-र्भूत्' इत्यशतवर्षे प्रेते । 'कुरुध्वम्'एवेतरस्मिन्निति । ततः कृताप-सव्या दक्षिणाभिमुखाः प्रकीर्णकेशाः प्रक्षालितैकवस्त्रधरा 'ॐ अपनः शोशुचदघम्' इति वामहस्तानामिकयाऽपो दक्षिणतो

---

( १ ) निःशेषस्तु न दग्धव्यः शेषं किञ्चित्त्यजेत्ततः ।
इत्यादित्यपुराणोक्तेः ।

( २ ) अत्रावसरे कपालक्रियां कुर्यात्—
अर्धे दग्धेऽथवा पूर्णे स्फोटयेत्तस्य मस्तकम् ।

नीत्वा सकृन्निमज्जेयुः (१)। ततो वामहस्तानामिकया कनीष्ठया 'पापम्' इत्यपो विलिखेयुः अङ्गं च न विघर्षेयुः। ततो द्विवासस आचम्य जले वा पाषाणपृष्ठे वा शुचितीरदेशे वा दक्षिणाग्रकुशत्रयोपरि वामहस्तान्वारब्धदक्षिणहस्ताङ्गुष्ठतर्जनीमध्यात्मकपितृतीर्थेन द्विगुणभुग्नकुशत्रयेण प्रेतगोत्रनामनी उच्चार्य मृतं मनसा ध्यायन्तः कुशहस्ताः प्रेताय सतिलजलाञ्जलिं दद्युः—

'ॐ अद्यामुकगोत्र पितरमुकप्रेत एष तिलतोयाञ्जलिस्ते मया दीयते तवोपतिष्ठताम्, इति वाक्येन। ततः कङ्कतिरूपेण वाममुष्टिनाऽवलिखितं 'पापम्' इति सव्याङ्गमविलिखेयुः। स्त्रिया उदकदाने स्त्रीलिङ्गेन निर्देशः कर्तव्य इति विशेषः। इयं च जलदानक्रिया दशमपुरुषपर्यन्तं कर्तव्या। समानग्रामवासे यावद्वासससम्बन्धमनुस्मरेयुस्तावत्तर्पयेयुः। श्वशुरमातामहमातुलाचार्यशिष्यसहाध्यायिमित्रदुहितृभगिनीभागिनेयराजर्त्विजां तद्धितैषिभिः काम्यमुदकदानं कर्तव्यम्। पतितापविद्धसर्वगामिनीवृथासङ्करजातप्रव्रजितात्मत्यागिपाखण्डिगर्भभर्तृहन्तृसुरापिद्विजस्त्रीणामुदकक्रियां न कुर्यात्। पतितस्य तृप्तिमिच्छन् सर्वगामिनीं दत्तवेतनां दासीमाहूय शुद्धघटहस्तां ब्रूयात्—

---

गृहस्थानां तु काष्ठेन यतीनां श्रीफलेन च॥ इत्युक्तेः।

अत्र रोदनमप्युक्तम् गारुडे—

रोदितव्यं ततो गाढं तेन तस्य सुखं भवेत्। इति।

(१) दाहादनन्तरं कार्यं स्त्रीभिः स्नानं ततः सुतैः।

इति गारुडवचनात् पूर्वं स्त्रीभिः स्नानं कार्यं, ततः पुत्रैस्ततः वृद्धपुरःसरैरन्यैरिति बोध्यम्।

हे दासि गच्छ मूल्येन तिलान्नानय सत्वरम् ।
तोयपूर्ण घटं त्वं च सतिलं दक्षिणामुखी ॥
उपविष्टा तु वामेन चरणेन ततः क्षिपेत् ।
कीर्तय: पातकीं संज्ञां त्वं पिबेति वदन्मुहुः ॥

इत्युक्ता चैव सा दासी मृताहनि पातकीं संज्ञां कीर्तयित्वा 'अमुकप्रेत त्वं पिब' इति पुनः पुनरभिधाय वामपादेन तोयपूर्णसतिलं घटमपवर्जयेत । तत उदकदानानन्तरमुदकोत्तीर्णान् कृतवस्त्रान्तरपरिधानानाचान्त न् पुत्रादीन् शुचिशाद्वले देशे उपविष्टान्—

नायमत्यन्तसंवासः कस्यचित्केनचित्सह ।
अपि स्वेन शरीरेण किमुतान्यैः पृथग्जनैः ॥

इत्यादि महाभारतादिवाक्यानि श्रावयित्वाऽपनीतशोकान्बन्धुजनाः (१) कुर्युः । ततः पुत्रादिर्लगुडमादाय मृन्मयेन नूतनभाण्डेन जलमानीय ग्रामाद्बहिर्देवतायतने गृहद्वारि वा शुचितीरे वा पिण्डदानस्थानादैशान्यां दिशि अग्निं प्रज्वाल्य तण्डुलप्रसृतिद्वयं प्रक्षाल्य सुशृतं स्वयं पचेत् । ततो दक्षिणाप्लवने भूभागे गोमयोपलिप्ते गौरमृत्तिकया पिण्डार्थं दक्षिणप्रवणं स्थानं निर्मायाऽऽचान्तः कृतापसव्यो दक्षिणाभिमुखः पातितवामजानुः पिण्डस्थानोपरि दक्षिणाग्रं कुशत्रयमास्तीर्य पुटकादौ जलतिलगन्धपुष्पाणि प्रक्षिप्य तत्पात्रं वामहस्ते कृत्वा पोटकतिलजलान्यादाय 'ॐ अद्यामुकगोत्र पितरमुकप्रेत शिरःपूरकप्रथमपिण्डस्थानेऽत्रावनेनिक्ष्व ते मया दीयते तवोपतिष्ठताम्' इति कुशत्रयोपरि अवनेजनं दद्यात् । ततः तिलघृतमधु-

(१) 'जनान्' क० ।

युक्तं दुग्धसिक्तं तप्तमेव पिण्डमादाय मोटकातिलजलानि चाऽऽदाय 'ॐ अद्याऽमुकगोत्र पितरमुकप्रेत एष शिरःपूरकः प्रथमः पिण्डस्ते मया दीयते तवोपतिष्ठताम्' इति कुशोपरि अवनेजनस्थाने पिण्डं दद्यात्। विहितकालेऽप्यकृतचूडाकरणस्य विहितकालेऽप्यकृतोपनयनस्य च भूमावेव पिण्डं दद्यात्। ततः प्रत्यवनेजनदानम्—'ॐ अद्यामुकगोत्र पितरमुकप्रेत शिरःपूरकप्रथमपिण्डेऽत्र प्रत्यवने निक्ष्व ते मया दीयते तवोपतिष्ठताम्' इति पिण्डोपरि पूर्ववद् दद्यात्। ततः प्रेतमुद्दिश्य तूष्णीमेव गन्धपुष्पधूपदीपोर्णातन्तुमयशुद्धबहुवस्त्रताम्बूलानि पिण्डे दद्यात्। ततोयावद्वाष्पं निस्सरति तावत्पिण्डाभिमुखस्तिष्ठेत्। ततोऽपसव्यादिनैव—'ॐ अद्यामुकगोत्र पितरमुकप्रेत एष सतिलतोयाञ्जलिस्ते मया दीयते तवोपतिष्ठताम्' इत्येकं तिलतोयाञ्जलिं पिण्डोपरि दद्यात्। एवं पिण्डसमीपे एव—'ॐ अद्यामुकगोत्र पितरमुकप्रेत इदं तिलतोयपूर्णपात्रं ते मया दीयते तवोपतिष्ठताम्' इत्येकं तिलतोयपूर्णपात्रं दद्यात्। पश्चाज्जले सर्वं क्षिपेत्। तत उपलिप्तायां भूमौ माल्यं, पानीयं, दीपं च निधाय—'ॐ अद्यामुकगोत्र पितरमुकप्रेत इदं माल्यं ते मया दीयते तवोपतिष्ठताम्' 'ॐ अद्यामुकगोत्र पितरमुकप्रेत इदं पानीयं ते मया दीयते तवोपतिष्ठताम्' 'ॐ अद्यामुकगोत्र पितरमुकप्रेत एष दीपस्ते मया दीयते तवोपतिष्ठताम्' इति दद्यात्। सायंकाले गृहद्वारि प्रेतमुद्दिश्य दशरात्रं (१) (त्रिरात्रं वा) दीपं दद्यात्।

---

(१) कंसान्तर्गतं ना० क० ख० ग०।

रात्रौ गोमयोपलिप्तायां भूमौ त्रिकाष्ठिकासमारोपितमृन्मयपात्र-द्वये जलं, क्षीरं च निधाय तत्समीपे माल्यं, दीपं च धृत्वा—'ॐ अद्यास्यां रात्रौ अमुकगोत्र पितरमुकप्रेताऽत्र स्नाहि इदं पिब इदं परिधेहि अनेन पश्य' इति निवेदयेत्। आकाशाधिकरणकदशरात्रावच्छिन्नप्रेतोद्देश्यकधृतजल-दानं सर्वपापशान्त्यध्वश्रमविनाशफलकम्। रात्रौ मृतके सूर्योदये, दिवामृतके नक्षत्रोदये बहि(१)र्भागादौ ब्राह्मणानु-मत्याऽर्वागपि बालपुरस्सरा वृद्धपश्चिमाः क्रमेण गृहद्वारमागत्य तत्रैव निम्बपत्राणि दन्तैश्छित्त्वाऽऽचम्य दक्षिणेन पाणिना 'ॐशमी पापं शमयतु' इति शमीम्, 'ॐ अश्मेव स्थिरो भूयासम्' इत्यश्मानम्, 'ॐअग्निर्नः शर्म यच्छतु' इत्यग्निं स्पृशेत्। वृषभच्छागयोर्मध्ये स्थित्वा 'ज्योग्' इति मन्त्रेण दक्षिणेन पाणिना द्वावपि स्पृशेत्। ततोऽश्मनि पदन्यासं कृत्वाऽऽचम्यो-दकगोमयगौरसर्षपाग्निदूर्वाप्रवालवृषभान् संस्पृश्य गृहं प्रविशेत्। एतच्च कुलान्तरजातानामपि शवस्पृशां कर्तव्यम्। ज्ञातयो नैव तस्यां रात्रावप्यन्नं पचेयुः। यावदशौचं मृन्मयपात्रे, पत्रपुटे, पाणौ वा क्रीतलब्धमनामिषं दिवा भुञ्जीरन्नेककालम्। त्रिरात्र-मक्षारलवणाशिनः द्वादशरात्रं महागुरुषु। माता पिताऽऽचार्य्यश्चेति महागुरवः। सर्वे ब्रह्मचारिणो दीना मलिनवाससो भोग-वर्जिताः शस्त्रपाणयोऽध उपवेशिनः पृथक् क्षितौ शयीरन्। उप-वेशने, शयने च तृणप्रस्तरणमुपासीरन्। प्रेतक्रियावर्जमनाव-श्यकं न किञ्चित्कर्म कुर्युः। पञ्चमसप्तमनवमादिवसेषु सर्वेषामेव

(१) 'भयादौ' क० ख० ग०।

सपिण्डानां बहिः स्नानं, तिलोदकदानं, वस्त्रप्रक्षालनं, सह-भोजनं, चतुष्पथश्मशानगृहेषु दीपदानमङ्गसंवाहनं च तैलाभ्यङ्ग-जागरादिकं प्रेताप्यायनकरम्। प्रथमपिण्डदानवद्द्वितीयादिषु दिवसेषु द्वितीयादि पिण्डदानम्। तत्र विशेषः—द्वितीयदिने पिण्डदानवाक्ये कर्णाक्षिनासिकापूरको द्वितीयः पिण्डः, द्वौ तिलतोयाञ्जली, द्वे तिलतोयपात्रे। तृतीयदिने-गलांसभुजवक्षः पूरकस्तृतीयः पिण्डः, त्रयस्तिलतोयाञ्जलयः, त्रीणि तिलतो-यपात्राणि। चतुर्थदिने—नाभिलिङ्गगुदपूरकश्चतुर्थः पिण्डः, चत्वा-रस्तिलतोयाञ्जलयः, चत्वारि तिलतोयपात्राणि। पञ्चमदिने-जानुजङ्घापादपूरकः पञ्चमः पिण्डः, पञ्च तिलतोयाञ्जलयः, पञ्च तिलतोयपात्राणि। षष्ठदिने—सर्वमर्मपूरकः षष्ठः पिण्डः षट् तिलतोयाञ्जलयः, षट् तिलतोयपात्राणि। सप्तमदिने—सर्वनाडी-पूरकः सप्तमः पिण्डः, सप्ततिलतोयाञ्जलयः, सप्त तिलतोयपा-त्राणि। अष्टमदिने—दन्तलोमादिपूरकोऽष्टमः पिण्डः, अष्टौ तिलतोयाञ्जलयः, अष्टौ तिलतोयपात्राणि। नवमदिने—वीर्य-पूरको नवमः पिण्डः, नव तिलतोयाञ्जलयः, नव तिलतोयपा-त्राणि। दशमदिने—पूर्णत्वतृप्तताक्षुद्विपर्ययपूरको दशमः पिण्डो देयः, दश तिलतोयाञ्जलयः, दश तिलतोयपात्राणि। अन्यत्सर्वं समानम्। तथाहि—

शिरस्त्वाद्येन पिण्डेन प्रेतस्य क्रियते सदा।
द्वितीयेन तु कर्णाक्षिनासिकास्तु समासतः॥
गलांसभुजवक्षांसि तृतीयेन तथाक्रमात्।
चतुर्थेन तु पिण्डेन नाभिलिङ्गगुदानि च॥

जानुजङ्घे तथा पादौ पञ्चमेन तु सर्वदा ।
सर्वमर्माणि षष्ठेन सप्तमेन तु नाडयः ॥
दन्तलोमाद्यष्टमेन वीर्यं तु नवमेन तु ।
दशमेन तु पूर्णत्वं तृप्तताक्षुद्विपर्ययः ॥

क्षत्रियवैश्यशूद्राणां सम्पूर्णाशौचे नवसु दिनेषु नव पिण्डान् दत्त्वाऽऽशौचान्तादिने दशमपिण्डदानम् । त्र्यहाशौचे ब्राह्मणादिभिः सर्वैः प्रथमदिवसे त्रयः पिण्डा दातव्याः । द्वितीयदिने चत्वारः, तृतीयदिने त्रयः पिण्डा देया । अथवा प्रथमदिवसे एकः पिण्डः, द्वितीयदिवसे चत्वारः, तृतीयदिवसे पञ्च, एवं दशपिण्डा दातव्याः । सद्यः शौचे त्वेकाहेनैव दश पिण्डा दातव्याः । असम्पूर्णाशौचान्तरे एकैकम्पिण्डमेकैकास्मिन् ( दिने ) दत्त्वाऽन्तिमदिनेऽवशिष्टाः पिण्डा देयाः । पाकासम्पत्तौ फलमूलशाकगुडदुग्धशालिसक्तूनामन्यतमेन पिण्डो देयः । येन द्रव्येण प्रथमपिण्डो दत्तस्तत्सजातीयेनैव पिण्डान्तरमपि दद्यात् । पुत्राद्यधिकारिणि विदेशस्थेऽन्येन दाहकर्त्रा पिण्डदाने कृतेऽपि पुत्रादिरपि पिण्डं दद्यात् । येनैव प्रथमः पिण्डो दत्तः स एव पिण्डान्तरमपि दद्यात्(१) ।

अथास्थिसञ्चयः—

चतुर्थे ब्राह्मणानां तु पञ्चमेऽहनि भूभुजाम् ।
नवमे वैश्यजातीनां शूद्राणां दशमात्परे ॥
कर्त्तव्यं तु नरैः श्राद्धं देशकालाविरोधतः ।

---

( १ ) असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान् ।
प्रथमेऽहनि यो दद्यात् स दशाहं समापयेत् ॥ इत्युक्तेः ।

श्राद्धमत्रास्थिसंचयननिमित्तकम्। एतच्च सम्पूर्णाशौचेषु दिनकथनम्। एवमाशौचिनामङ्गस्पर्शोऽपि—

चतुर्थेऽहनि विप्रस्य षष्ठे वै क्षत्रियस्य तु।
अष्टमे दशमे चैव स्पर्शः स्याद्वैश्यशूद्रयोः।

यत्तु—

प्रथमेऽह्नि तृतीये वा सप्तम नवमेऽपि वा।
अस्थिसंचयनं कार्य्यं (१) निजैस्तद्गोत्रजैः सह॥

इति स्मृतिवाक्यं, तद्ब्राह्मणादीनां चतुर्थादिदिनेष्वस्थिसंचयासम्भावनायां प्रथमादिदिवसेष्वस्थिसंचयनविधायकम्। त्र्यहाशौचे तु द्वितीयेऽह्नि, सद्यः शौचे तद्दिन एवास्थि सञ्चयः कर्त्तव्यः। असम्पूर्णाशौचान्तरेषु तृतीयभागोत्तरमास्थिसञ्चयोऽङ्गस्पर्शश्च कर्त्तव्य इति।

अथ प्रयोगः-(२)चतुर्थदिने स्नात्वा चतुर्थं पिण्डं दत्वा श्राद्धदेशस्य गोमयोपलेपनं पञ्चगव्योपलेपनं ज्वलदङ्गारभ्रामण-गौरमृत्तिकाच्छादनानि कारयित्वा गौरसर्षपैस्तिलैश्च विकिरणं स्वयं च श्राद्धकर्त्ता पाकमारभेत। ततः सिद्धेऽन्ने रक्षादीपं संस्थाप्य श्राद्धे देयानि वस्तून्यासाद्य आचम्य पूर्वाभिमुख उपविश्य 'ॐ अपवित्रः पवित्रो वा' इत्यादि पठित्वा 'पुण्डरी-

(१) 'दिने' इ० पा०

(२) अपरेद्युस्तृतीये वा दाहानन्तरमेव वा।

इति पद्धतिवचनात् समाचाराच्च दाहानन्तरमेव अनुष्ठीयते। चितां जलेन शान्तां कृत्वास्थीनि सञ्चेष्यन् तन्निमित्तकं श्राद्धं कुर्यात्।

स्थानद्वारेऽर्धमार्गे च चितायां शवहस्तके।
अस्थिसञ्चयने षष्ठो दशपिण्डा दशाह्हिकाः॥ इति गारुडवचनात्।

काशः पुनातु' इति श्राद्धीय वस्तूनां कुशत्रयजलेन सेचनम् । ततः-'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्यास्थिसंचयनिमित्त-कर्मैकोद्दिष्टश्राद्धमहं करिष्ये' इति संकल्पं कुर्यात् । ततस्त्रिर्गायत्रीं जपित्वा 'ॐ देवताभ्य०' इति त्रिर्जपेत् । ततोऽपसव्यं कृत्वा मोटकातिलजलान्यादाय दक्षिणाभिमुखः सव्यं जानुं पातयित्वा–'ॐ अद्यामुकगोत्र पितरमुकप्रेतास्थिसंचयननिमि-त्तकैकोद्दिष्टश्राद्ध इदमासनं ते मया दीयते तवोपतिष्ठताम्' इत्यासनं मोटकरूपमुत्सृजेत् । ततः–'ॐ अपहता असुरा रक्षांᳫँसि वेदिषदः' इति श्राद्धदेशे वामावर्तेन तिलान्विक्षिपेत् । ततः–'ॐ आय तु न०' इति मन्त्रं जपेत् । ततः पुटके कुशपत्रद्वयं प्रादेशमात्रं दक्षिणाग्रं धृत्वा–'ॐ शन्नो देवीरभिष्टय०' इति तत्र जलं दद्यात् । 'ॐ तिलोऽसि'० इति तिलान्दद्यात् तूष्णीं गन्धपुष्पे च तत्र क्षिपेत् । ततस्तदर्घपात्रं वामहस्ते कृत्वा कुश-पत्रद्वयं परिवेषणपात्रे उत्तराग्रं धृत्वा तदुपरि किञ्चिदुदकान्तरं दत्त्वा–'ॐ या दिव्या आप०' इति पठित्वा मोटकादीन्यादाय–'ॐ अद्यामुकगोत्र पितरमुकप्रेताऽस्थिसंचयननिमित्तकैकोद्दिष्ट-श्राद्ध एष हस्तार्घस्ते मया दीयते तवोपतिष्ठताम्' इति पवित्रोपरि अर्घजलं ददद्युत्सृजेत् । ततः पवित्रपुष्पसहितमर्घपात्रमास-नवामपार्श्वे 'पित्रे स्थानमसि' इति अधोमुखं कृत्वा स्थापयेत् । ततो मोटकादीन्यादाय–'ॐ अद्यामुकगोत्र पितरमुकप्रेताऽस्थि-संचयननिमित्तकैकोद्दिष्टश्राद्धे एतानि गन्धपुष्पधूपदीपताम्बूल-यज्ञोपवीतवासांसि ते मया दीयन्ते तवोपतिष्ठन्ताम्' इति गन्धा-दीनि दद्यात् । ततो जलेनासनभोजनपात्रयोश्चतुर्दिशं चतुष्कोणं

मण्डलं कृत्वा आर्द्रीयान्नाग्रभागं सघृतव्यञ्जनतिलजलम्–'ॐ इदमन्नमेतद्भूस्वामिपितृभ्यो नमः' इति उत्सृजेत्। ततो हस्ताभ्यां ताम्रपात्रमन्नपूर्णमादाय मनाक् स्थित्वा पितरं ध्यायन् पुरुषतृप्तिक्षममन्नं परिविष्यात्। व्यञ्जनघृतजलान्युपनीय अन्नोपरि मधु दत्त्वा 'ॐ मधुव्वाता' इत्यादि ऋचम् 'ॐ मधु मधु मधु' इति च जपेत्। ततो व्यस्ताभ्यां हस्ताभ्यामधोमुखाभ्यां पात्रमालभ्य 'ॐ पृथिवी ते पात्रम्०' इति जपत्। 'ॐ इद विष्णु०ः' इति जपेत्। तत 'ॐ कृष्णकव्यमिदं रक्ष मदीयम्' इति पठित्वा 'ॐ इदमन्नम्' 'ॐ इमा आपः' 'ॐ इदमाज्यम्' 'ॐ इदं हविः' इति। अत्र जलघृतान्नेषु दक्षिणहस्ताङ्गुष्ठं निवेश्य 'ॐ अपहता०' इति तिलानन्नोपरि क्षिप्य वामहस्तेन पात्रमत्यजन् दक्षिणहस्तेन मोदकादीन्यादाय 'ॐ अद्यामुकगोत्र पितरमुकप्रेतास्थिसंचयननिमित्तकैकोद्दिष्टश्राद्ध इदमन्नं सोपकरणं ते मया दीयते तवोपतिष्ठताम्' इत्युत्सृजेत्। ततो गायत्रीं, मधुव्वाता इत्यादि ऋचम्, 'ॐ मधु मधु मधु' इति च, 'ॐ अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत्। तत्सर्वमच्छिद्रमस्तु' इति च जपेत्। ततः कुशेषूपविश्य गायत्रीं, मधुव्वाता इत्यादिकं जपेत्। ततः 'ॐ कृणुष्वपाज' इत्यादिरक्षोघ्नीः 'ॐ उदीरताम्' इत्यादिपितृमन्त्रान्, पुरुषसूक्तम्, 'आशुःशिशान' इत्यादिकमप्रतिरथम्, अन्यानि च पवित्राणि यथाशक्ति जपेत्। 'ॐनमस्तुभ्यम्०' श्लोकं पठेत्। तत उच्छिष्टसान्निधावास्तृतकुशत्रयां भूमिं जलेन प्रोक्ष्य तिलघृतव्यञ्जनसहितमन्नं जलेनाप्लाव्य 'ॐ अनग्निदग्धा ये जीवा ये प्रदग्धाः कुले मम' इत्यादिमन्त्रेण

कुशोपरि अन्नं विकिरेत् । ततः सव्यं कृत्वाऽऽचम्य हरिं स्मृ-त्वाऽपसव्यं कृत्वाऽन्नपात्रसमीपे पिण्डदानार्थं मृत्पिण्डिकाया मध्ये प्रादेशमात्रं परिमाय वामान्वारब्धदक्षिणहस्तेन 'ॐ अप-हता' इत्यादिनातदुल्लिख्य दर्भपिञ्जुलीमुत्तरस्यां दिशि क्षि-प्त्वा रेखोपरि 'ॐ य रूपाणि' इति मन्त्रेणाङ्गारं भ्रामयित्वा-ऽङ्गारं दक्षिणतः क्षिपेत् । ततो रेखोपरि छिन्नमूलान्कुशानास्तीर्य 'ॐ देवताभ्य' इति सव्येन त्रिर्जपेत् । ततोऽपसव्येन पुटके जलतिलगन्धपुष्पाणि क्षिप्त्वा पुटकं वामहस्ते कृत्वा मोटकादी-न्यादाय—'ॐ अद्यामुकगोत्र पितरमुकप्रेताऽस्थिसंचयननिमि-त्तकैकोद्दिष्टश्राद्धपिण्डस्थानेऽत्रावनेनिक्ष्व ते मया दीयते तवोप-तिष्ठताम्'इति कुशोपरि अवनेजनजलं किञ्चिद्दद्यात् । ततो घृत-मधुतिलयुक्तेनान्नेन पिण्डं निर्माय घृतमध्वभिघारितं पिण्डं मोट-कादीनि चादाय 'ॐ अमुकगोत्र पितरमुकप्रेताऽस्थिसंचयन-निमित्तकैकोद्दिष्टश्राद्ध एष पिण्डस्ते मया दीयते तवोपतिष्ठताम्' इति कुशोपरि वामान्वारब्धदक्षिणहस्तेन पिण्डं दद्यात् । ततः आस्तृतकुशमूले तूष्णीं करं प्रोक्ष्य सव्यं कृत्वाऽऽचम्याऽपसव्यं कृत्वा 'ॐ अत्र पितर्मादयस्व'इत्यादि पठित्वा उत्तराभिमुखी-भूय श्वासं नियम्य पितरं भास्वरमूर्तिं ध्यायन् 'अमीमदन्त पिता' इत्याद्यूहेन जपेत् । ततः पूर्वावशिष्टजलयुतमवनेजनपात्रं वामहस्ते कृत्वा मोटकादीन्यादाय—'ॐ अद्यामुकगोत्र पितरमु-कप्रेताऽस्थिसंचयननिमित्तकैकोद्दिष्टश्राद्धपिण्डेऽत्र प्रत्यवने निक्ष्व ते मया दीयते तवोपतिष्ठताम्' इति प्रत्यवनेजनं दद्यात् । ततो नीवीं विस्रंस्य सव्यं कृत्वाऽऽचम्य हरिं स्मृत्वा अपसव्यं कृत्वा

वामहस्तेन सूत्रमादाय कराभ्यां तद्गृहीत्वा 'एतत्ते पितर्वासः' इति सूत्रं पिण्डोपरि धृत्वा 'ॐ अद्यामुकगोत्र पितरमुकप्रेता-ऽस्थिसंचयननिमित्तकैकोद्दिष्टश्राद्धपिण्डे एतद्वासस्ते मया दीयते तवोपतिष्ठताम्' इति मोटकादिना दद्यात् । ततः पिण्डं गन्धपुष्पधूपदीपताम्बूलादिभिरभ्यर्च्य पिण्डशेषान्नं पिण्डसमीपे विकिरेत् । 'ॐ शिवा आपः सन्तु' 'ॐ सौमनस्यमस्तु' 'ॐ अक्षतं चारिष्टमस्तु' इत्यन्नपात्रे जलादीनि दत्त्वा मोटकादीन्यादाय 'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्याऽस्थिसंचयननिमित्तकै-कोद्दिष्टश्राद्धे दत्तैतदन्नपानादिकमुपतिष्ठताम्' इत्युत्सृजेत् । ततः सव्यं कृत्वा दक्षिणां दिशं पश्यन् 'ॐ अघोरः पिता-ऽस्तु' इति पिण्डोपरि पूर्वाग्रां जलधारां दद्यात् । ततः पूर्वा-भिमुखः 'ॐ गोत्रं नो वर्धतां दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च' इत्यादिना आशिषो याचेत । ततोऽपसव्यं कृत्वा पिण्डोपरि सपवित्रान् कुशानास्तीर्य पुटकादिजलेन 'ॐ ऊर्ज्जं वहन्तीरमृतं घृतं पय' इत्यादि पठित्वा कुशोपरि दक्षि-णाग्रां जलधारां दद्यात् । ततः पिण्डमाघ्रायोत्थापयेत् । छिन्न-मूलकुशानङ्गारं चाग्नौ दहेत् । अर्घपात्रमुत्तानीकृत्य मोटका-दीनि दक्षिणाद्रव्यं चादाय 'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रे-तस्य कृतैतदस्थिसञ्चयनिमित्तकैकोद्दिष्टश्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे' इति दक्षिणां दद्यात् । ततः सव्येन त्रिः'देवताभ्य' इति जपि-त्वाऽपसव्यं कृत्वा दीपं निर्वाप्य हस्तौ पादौ प्रक्षाल्य सव्येना-चम्य 'ॐ प्रमादात्' इति पठित्वा विष्णुं स्मरेत् । श्राद्धीयवस्तूनि

ब्राह्मणाय प्रतिपादयेत् जले वा क्षिपेत् । इति अस्थिसञ्चयनिमित्तकैकोद्दिष्टश्राद्धप्रयोगः ।

अथाष्टाङ्गबलिः—ततः पुत्रादिः स्नातो बन्धुमिलितः धौतवस्त्रो नानाविधफलमूलभक्ष्यपानादिभिः स्वजात्यनुरूपैरष्टौपात्राणि पूरयित्वा गन्धपुष्पधूपदीपादिकं च गृहीत्वा श्मशानसमीपमागत्य त्वरान्वितैः कैश्चि (१) दर्घैः, कैश्चित्पुष्पैः, कैश्चिद्भोजनैः, कैश्चिद् धूपैः, कैश्चिद्दीपैः, कैश्चिन्माल्यैः, कैश्चित्पानीयैः, कैश्चदक्षतैः सर्वं निवेदयेत् । कैश्चिन्निरहङ्कारयुक्तैः क्षमन्ततश्चतुर्षु अन्नादिपूर्णपात्रेषु निवेदितेषु प्रथमं चितायामुत्तरद्वारसमीपे उपविश्य ।

ॐ नमः क्रव्यादमुरूपेभ्यो देवेभ्य इति सर्वदा ।
येऽस्मिन् श्मशाने देवाः स्युर्भगवन्तः सनातनाः ॥
तेऽस्मत्सकाशाद्गृह्णन्तु बलिमष्टाङ्गमक्षयम् ।
प्रेतस्यास्य शुभाँल्लोकान् प्रयच्छन्तु च शाश्वतान् ।
अस्माकमायुरारोग्यं सुखं च ददतां वरम् ॥

इति पठित्वा 'ॐ एषोऽष्टाङ्गबलिः शङ्करादिदेवताभ्यो नमः' इत्येकं बलिं दत्त्वा एवं प्रदक्षिणक्रमेणापरं बलित्रयं त्रिषु द्वारेषु दत्त्वा तान् बलीन् क्षीरेणाभ्युक्ष्य 'शङ्करादिदेवताः स्वीयस्वीयस्थानं गच्छन्तु' इति देवता विसृज्यावशिष्टक्षीरेण वाग्यतः चितास्थीनि अभ्युक्ष्य प्रथमं शिरोऽस्थीनि शमीपलाशशाखाभ्यामुद्धृत्योद्धृत्याज्येनाभ्युक्ष्य गन्धवारिणा सिक्त्वा कृतापसव्यो

(१) गन्धपुष्पाक्षतयवाः कुशाग्रतिलसर्षपाः ।
दूर्वा चेति क्रमादर्घद्रव्याष्टकमुदीरितम् ॥ इति ।

दक्षिणाङ्गुष्ठानामिकाभ्यां गृहीत्वा ततोऽन्यान्यपि अस्थीनि गृहीत्वा पञ्चगव्येन सुगन्धिवारिणा सिक्त्वा पलाशपुटके निःक्षिप्य क्षौमवस्त्रेण संवेष्ट्य मृन्मये नूतनभाण्डे साच्छादने निदध्यात् । तद्भाण्डमरण्ये वृक्षमूले वा पङ्कशैवालयुतगर्ते वा निभृतं निधापयेत् । चिताभस्मादि तोये विनिःक्षिपेत् । गोमयाम्बुमिश्रिताभूमिशुद्धिं विधाय पूर्ववच्चतुर्दिशं शङ्करादिदेवताभ्यो बलीनर्घादियुक्तान् 'नमः क्रव्यादमुख्येभ्यो देवेभ्य' इति मन्त्रेण दद्यात् । तान्विसृजेत् । बल्यन्नमन्येभ्यो दद्यात् अम्भसि वा क्षिपेत् । तत श्चिताभूमेराच्छादनार्थं वृक्षः, पुष्करकः, पटको वा कारयितव्यः । 'पुष्करकः' इष्टिकानिर्मितं देवकुलागारं गृहम् । ततः सचैलो बन्धुभिः सह स्नायात् । अथ कश्चित्पुत्रपौत्रसहोदरादिगङ्गातीरमस्थीनि नीत्वा स्नात्वा तान्यस्थीनि पञ्चगव्येन प्रोक्ष्य हिरण्यमध्वाज्यतिलैः संयोज्य मृत्पिण्डपुटके निधाय दक्षिणां दिशं पश्यन् 'ॐ नमोऽस्तु धर्माय' इति वदञ्जलं प्रविश्य प्रेतो गतः स्वर्गकामो दक्षिणाभिमुखः 'स मे प्रीत' इत्युक्त्वा गङ्गाम्भसि निःक्षिपेत् । ततः स्नात्वा उत्थाय सूर्यं पश्येत् । तत आचम्य 'ॐ अद्य कृतैतदस्थिप्रक्षेपप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतं यथानामगोत्राये ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे' इति दक्षिणां दद्यात (१) ।

---

(१) अस्थीनि मातापितृवंशजानां नयन्ति गङ्गामपि ये कथञ्चित् ।
सद्बान्धवस्यापिदयाभिभूतास्तेषां तु तीर्थानि फलप्रदानि ॥
स्नात्वा ततः पञ्चगव्येन सिक्त्वा हिरण्यमध्वाज्यतिलैश्चयोज्य ।
ततस्तु मृतपिण्डपुटे निधाय पश्यन्दिशं प्रेतगणोपगूढाम् ॥
'नमोस्तुधर्माय' वदन्प्रविश्य जलं स मे प्रीत इति क्षिपेच्च ।
उत्थाय भास्वन्तमवेक्ष्य सूर्यं स दक्षिणां विप्रमुखाय दद्यात् ॥ इति ।

एवं कृते प्रेतपुरःस्थितस्य स्वर्गे गतिः स्यात्तु महेन्द्रतुल्या ।

यावदस्थि मनुष्यस्य गङ्गातोयेषु मज्जति ।

तावद्वर्षसहस्राणि स्वर्गे लोके महीयते ॥

गङ्गातोयेषु यस्यास्थि प्लवते शुभकर्मणः ।

न तस्य पुनरावृत्तिर्ब्रह्मलोकात्कथञ्चन ।

गौडाः—

दशाहाभ्यन्तरे यस्य गङ्गातोयेऽस्थि मज्जति ।

गङ्गायां मरणे यादृक्तादृक्फलमवाप्नुयात् ॥

ब्रह्मपुराणे—

मातृकुलं पितृकुलं वर्जयित्वा नराधमः ।

अस्थीन्यन्यकुलोत्थानि नीत्वा चान्द्रायणं चरेत् ।

एवं मातृकुलपितृकुलान्यकुलोत्थस्यास्थिनयने धर्मबुद्ध्या दोषाभावः।

अथाचाराग्निरग्नेरप्यस्थिपर्णनरदाहः-दाह्यशरीरालाभे तदस्थिघृतेनाभ्युक्ष्य वस्त्रेणाऽऽच्छाद्य दहेत् । अस्थ्नामप्यलाभे षष्ट्यधिकशतत्रयपलाशपत्रैः पुरुषाकृतिं विन्यस्य 'ॐ असौ स्वर्गाय लोकाय स्वाहा' इति दहेत् । उदकधारां च दद्यात् ।

तद्विन्यासप्रकारस्तु—

शिरस्यशीत्यर्द्धमेवं ग्रीवायां तु दशैव तु ।

बाह्वोश्चैव शतं दद्यादङ्गुलीषु तथा दश ॥

उरसि द्विशतं दद्याद्विंशतिं जठरे तथा ।

अष्टार्धं शिश्नके दद्याद्द्वादशार्द्धं तु मुष्कयोः ॥

ऊर्वोश्चैव शतं दद्यात्त्रिंशतिं जानुजङ्घयोः ।

पादाङ्गुलीषु दश वै ह्येतत्पत्रविकल्पनम् ॥

अनाहिताग्नेर्देहस्तु दाह्यो गृह्याग्निना द्विजैः ॥
तदलाभे पलाशोत्थैः पत्रैः कार्यः पुमानपि ॥
शतैस्त्रिभिस्तथा षष्ठ्या शरवातैर्विधानतः।
वेष्टितव्यस्तथा यत्नात्कृष्णसारस्य चर्मणा ॥
ऊर्णासूत्रेण बद्ध्वाथ प्रलिप्तव्यस्तथा यवैः।
सुपिष्टैर्जलसंमिश्रैः प्रदग्धव्यस्तथाग्निना ॥
असौ स्वर्गाय लोकाय स्वाहेत्युक्त्वा स्वबान्धवैः।
एवं पर्णनरं दग्ध्वा त्रिरात्रमशुचिर्भवेत् ॥
तुल्यन्यायतयाऽस्थिदाहेऽपि त्रिरात्राशौचम्।
एवंकृते मृते भ्रान्त्या यद्यागच्छेत्पुमान्क्वचित् ॥
कुर्यादथायुषीमिष्टिं पुनराधाय पावकम्।
साग्नेरियमिष्टिः। निरग्नेस्तु शान्तिस्वस्त्ययनमन्यादिति।

अथाशौचान्तादिने कृत्यम्—तत्राशौचान्तपूर्वदिने सर्वेषां रजकद्वारा वस्त्रशुद्धिः कारयितव्या। अशौचान्तदिवसे गृहशुद्धिं कृत्वा मृन्मयपाकभाण्डानि त्यक्त्वा स्नात्वा दशमं पिण्डं दत्त्वा स्नात्वा बहिरुदकान्ते केशलोमनखान् यथायोग्यं वापयित्वा(१)

(१) अशौचान्त्यदिने क्षौरं जनन्यां च गुरौ मृते।
इति व्यासस्मृतेः।
दशमे दिवसे क्षौरं बान्धवानां समुण्डनम्।
क्रियाकर्ता सुतश्चापि पुनर्मुण्डनमाचरेत्। इति गारुडोक्तेश्च।
'अनुभाविनां च परिवापनम्' इत्यापस्तम्बोक्तेश्च। परिवापनमिति परित्यज्य शिखां वापनं परिवापनमित्यर्थः। अनुभाविनः प्रेतकनिष्ठा इत्येके, प्रेतदुःखानुभाविनः सर्व एवेत्यन्ये। पुत्रः, पत्नी, पिण्डदानोचितोऽन्योपि इत्येव एवेत्यपरे। जननाशौचेऽपि मुण्डनमिति रत्नमालायाम्। अत्र सर्वत्र समाचाराद्व्यवस्था।

तिलतैलेनाऽऽभ्यक्त्वा गौरसर्षपकल्केन शिरश्चोन्मज्ज्य स्नात्वा प्रेत-स्पृष्टवासांस्यन्त्यजेभ्यः स्वाश्रितेभ्यो दत्त्वाऽऽचम्य वाग्यतो वासोयुग्ममहतं नवं शुद्धं पुरातनं वा शुक्लमव्रणं परिधायाऽश्मा-विष्टो गां सुवर्णं गोरोचनं दधिदूर्वासितसर्षपं ब्राह्मणोऽग्निं, क्षत्रियोवाहनायुधे, वैश्यः प्रतोदप्रग्रहौ, शूद्रो यष्टिं संस्पृश्य मङ्गलानि सङ्कीर्त्य ब्राह्मणान् स्वस्ति वाचयित्वा गृहं प्रविशेत् । अत्र दिने ब्राह्मणाः पञ्चगव्यपानं कुर्वन्तीति समाचारः ।

इति श्राद्धविवेके प्रथमक्रियापरिच्छेदो द्वितीयः ॥२॥

---

# अथ तृतीयः परिच्छेदः ।

अथैकादशाहश्राद्धार्थं निमन्त्रणादिः—तत्रादौ अशौचान्त-दिने निरामिषमेकवारं भुक्त्वा रात्रौ सर्वभुक्तजने गृहे विप्रनिवे-शनम् । गोमयोपलिप्तदक्षिणप्रवणभूमौ ब्राह्मणमुदङ्मुखमुपवेश्य कृतापसव्यो दक्षिणाभिमुखो पातितवामजानुः—

ॐ गतोऽसि दिव्यलोकं त्वं कृतान्तविहितात्पथः ।
मनसा वायुभूतेन विप्रे त्वाहं नियोजये ॥

पूजयिष्यामि भोगेन ( एवं विप्रं निमन्त्रयेत् । ) इति प्रेतो-द्देशेन पठित्वा पुष्पचन्दनताम्बूलानि ब्राह्मणाय दत्त्वा ब्राह्मण-दक्षिणजानुं स्पृष्ट्वा 'ॐ अस्यां रात्रौ अमुकगोत्रस्य पितुरमुक-प्रेतस्याऽऽद्यश्राद्धकरणाय भवन्तं ब्राह्मणमहमामन्त्रये' इत्या-मन्त्रयेत् । 'ॐ आमन्त्रितोऽस्मि' इति प्रतिवचन ब्राह्मणेनोक्ते—

ॐ अक्रोधनेन शौचपरेण सततं ब्रह्मवादिना ।
भवितव्यं च भवता मया च श्राद्धकारिणा ॥

सर्वायासविनिर्मुक्तेन कामक्रोधविवर्जितेन।
भवितव्यं भवता नः श्वस्तने श्राद्धकर्मणि॥

इति ब्राह्मणमुद्दिश्य पठेत्। 'यद्यविघ्नेन रजनी यास्यति तदा सर्वमेतत्कारिष्यामि' इति तेनोक्ते 'ॐ इदं ते पाद्यम्' इति पाद्यं दत्त्वा द्विजं नमस्कृत्य प्रेतहितमुद्दिश्य तिलतैलेनाजानुवि-प्रपादा प्रक्षालयेत्। अत्र स्त्रिया अप्युद्देश्यत्वे 'ॐ गतोऽसि' इत्यविकृतमेव पठनीयम् आत्मत्वेनोद्देश्यत्वात्।

अथैकादशाहकृत्यम्—गत्वा बहिर्नदीतीरादौ प्रातः श्वेत-वस्त्रयुगलेन स्नात्वा सूर्योदये पात्रब्राह्मणस्य श्मश्रुकर्म नखच्छे-दनञ्च कारयित्वा ताम्रपात्रेण तैलोद्वर्तने स्नानोपकरणं च दद्यात्। स्वयं स्नात्वा कृतनित्यक्रियो नदीतीरे गृहे वा श्राद्ध-भूमिं परिकल्प्य पञ्चगव्येनोपालिप्य ज्वलदङ्गारैः संशोध्य गौर-मृत्तिकयाऽऽच्छाद्य तिलैः सर्षपैश्च विकिरेत्। गोमयोपलिप्तावृत-पाकस्थाने तिलान् विकीर्य परितश्छागान् बन्धयित्वा तत्र सपिण्डद्वारा स्वयं वा नूतनमृन्मयभाण्डैः पाकमारभेत। तत आचान्तः पूर्वाभिमुख उदङ्मुखाय शय्यां दद्यात् (१)। ततः 'ॐ सोपकरणशय्यायै नमः' 'ॐ ब्राह्मणाय नमः' इति देय-ब्राह्मणौ त्रिः सम्पूज्य 'इमां सोपकरणां शय्यां ददानि' इति द्विजकरे जलदानं, वारिणा शय्याभिषेचनञ्च कुर्यात्। 'ॐ दद-स्व' इति प्रतिवचनम्। ततस्त्रिकुशतिलजलान्यादाय 'ॐ अद्या-शौचान्तद्वितीयेऽह्नि अमुकगोत्रस्य पितुरमुकप्रेतस्य स्वर्गप्राप्ति-

(१) यदि मुमूर्षोः दशदानादिकं कर्म न जातं तदाऽस्मिन्नवसरे कुर्यात् प्रेतपदोल्लेखेन।

तिलाद्यष्टमहादानमन्तकाले नचेत् कृतम्।
शय्यासमीपे धृत्वैतद्दानं तस्य प्रदापयेत्॥ इति गारुडोक्तेः।

काम इमां सोपकरणां शय्यां विष्णुदैवत्याममुकगोत्रायामुकश-र्मणे ब्राह्मणाय तुभ्यमहं संप्रददे' इति दद्यात्। 'ॐ स्वस्ति' इति प्रतिवचनम्। ततः कुशतिलजलानि दक्षिणाद्रव्यं चादाय ॐ अद्य कृतैतत्सोपकरणशय्यादानप्रतिष्ठार्थमिदं हिरण्य-मग्निदैवत्यममुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणां तुभ्यमहं संप्रददे' इति दद्यात्। ततः प्रतिगृहीता 'ॐ स्वस्ति' इति प्रति-वचनमुक्त्वा सोपकरणां शय्यां संस्पृशेत्। ततः आचम्य 'ॐ फलवस्त्रसमन्वितकाञ्चनपुरुषाय नमः, 'ॐ ब्राह्मणाय नमः' इति देयब्राह्मणौ त्रिः संम्पूज्य 'ॐ इमं फलवस्त्रसमन्वितं का-ञ्चनपुरुषं ददानि' इति द्विजकरे जलदानम्। वारिणा देयद्रव्य-सेचनम्। कुशत्रयतिलजलान्यादाय 'ॐ अद्याशौचान्तद्विती-येऽह्नि अमुकगोत्रस्य पितुरमुकप्रेतस्य स्वर्गप्राप्तिकाम इमं फलवस्त्रसमन्वितकाञ्चनपुरुषं विष्णुदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे' इति दद्यात्। 'ॐ स्वस्ति' इति प्रतिवचनम्। ततो दक्षिणाद्रव्यमादाय 'ॐ अद्य कृतैतत्फलवस्त्र-समन्वितकाञ्चनपुरुषदानप्रतिष्ठार्थमिदं हिरण्यमग्निदैवत्यममुकगो-त्रायामुकशर्मणे ब्राह्मणाय दक्षिणां तुभ्यमहं संप्रददे' इति दद्यात्। ततः प्रतिगृहीता 'ॐस्वस्ति' इत्युक्त्वा काञ्चनपुरुषं स्पृशेत्। तत आचम्य कुशत्रयतिलजलान्यादाय 'ॐ अद्या-शौचान्तद्वितीयेऽह्नि अमुकगोत्रस्य पितुरमुकप्रेतस्य स्वर्गप्राप्ति-कामो द्विजदम्पतिपूजनमहं करिष्ये' इति संकल्प्य द्विजदम्पतिं पूजयेत्। तत्र क्रमः 'ॐ द्विजदम्पतिभ्यां नमः एषोऽर्घः' 'ॐ द्विजदम्पतिभ्यां नमः इदमनुलेपनम्' 'ॐद्विजदम्पतिभ्यां नमः' इत्युभयोः पादयोस्त्रिःपूजांकुर्यात्। ततः पुष्पजला-

भ्यामेतानि पुष्पधूपदीपनैवेद्यताम्बूलसिन्दूरविभूषणवासांसि ॐ 'द्विजदम्पतिभ्यां नमः' इति दद्यात्। तौ नमस्कुर्यात्। एतच्च द्विजदम्पतिपूजनं प्रधानत्वात् वृषोत्सर्गाकरणेऽपि कर्त्तव्यं शय्यादानवदिति।

अथ वृषोत्सर्गप्रयोगः—तत्र वृषोत्सर्गसम्भूतिं विविक्तं निर्जनवनगोमध्ये प्रागुदक्प्रवणं देशं नयेत्। तत आचान्तः पूर्वाभिमुख उपविश्य कुशत्रयतिलजलान्यादाय 'ॐ अद्याशौचान्तद्वितीयेऽह्नि अमुकगोत्रस्य पितुरमुकप्रेतस्य मोक्षकामः सोपकरणवत्सतरीचतुष्टयसहितवृषोत्सर्गमहं करिष्ये' इति संकल्पं कुर्यात्। नीलवृषप्राप्तौ नीलपदप्रक्षेपः कर्त्तव्यः। कार्त्तिक्यां वृषोत्सर्गे—'ॐ अद्य कार्त्तिक्यां तिथौ अमुकगोत्रस्य पितुरमुकशर्मणो मोक्षकामोऽपूपान् दत्त्वा सोपकरणवत्सतरीचतुष्टयसहितं वृषोत्सर्गमहं करिष्ये' इति संकल्पयेदिति विशेषः। वत्सतर्यष्टकपक्षे चतुष्टयपदस्थानेऽष्टकपदप्रक्षेपः। तत उत्तराभिमुखं ब्राह्मणमुपवेश्य 'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य कर्तव्यवृषोत्सर्गाङ्गभूतहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्म कर्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचन्दनताम्बूलवस्त्रयुगहेमालङ्करणैर्ब्रह्मत्वेन त्वामहं वृणे' इति ब्राह्मणं वृणुयात्। ॐ 'वृतोऽस्मि' इति प्रतिवचनम्। 'ॐ यथाविहितं कर्म कुरु' इति यजमानस्तमुद्दिश्य वदेत्। 'ॐ करवाणि' इति तत्प्रतिवचनम्। ततः 'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य कर्तव्यवृषोत्सर्गाङ्गभूतहोमकर्म कर्तुममुकशर्माणं ब्राह्मणमेभिः पुष्पचन्दनताम्बूलहेमालंकरणवासोभिर्होतृत्वेन त्वामहं वृणे' इत्याचार्यं वृणुयात्। 'ॐ वृतोऽस्मि' इति प्रतिवचनम्। 'ॐ यथाविहितं कर्म कुरु' इति यजमानस्त-

मुद्दिश्य वदेत् । 'ॐ करवाणि' इति प्रतिवचनम् । ततो होता आचान्तो गोमयोपलिप्तवेदिकायां प्राङ्मुख उपविश्य पुरतः कुशैर्हस्तमात्रं चतुरस्रं स्थण्डिलं परिसमुह्य, कुशानैशान्यां निःक्षिपेत् । गोमयोदकेनोपलिप्य मध्ये प्रादेशमात्रमुत्तरोत्तरक्रमेण स्रुवमूलेन त्रिरुल्लिख्य उल्लेखनक्रमेण दक्षिणाङ्गुष्ठानामिकाभ्यां सङ्गताग्राभ्यां मृदमुद्धृत्य ऐशान्यां तां क्षिप्त्वा तं देशं जलेनाभ्युक्ष्य तत्र दक्षिणहस्तस्थकांस्येन तूष्णीमग्निं प्रत्यङ्मुखं स्थापयेत् । अग्नेर्दक्षिणतः परिस्तरणभूमिमतिक्रम्य शुद्धमासनमुपकल्प्य तत्र प्रागग्रकुशैरास्तरणं विधाय, ब्रह्माणमग्नेर्वायव्याः प्रदक्षिणमानीय कल्पितासने बर्हिर्हस्तमुदङ्मुखमुपवेशयेत् । ततोऽग्नेरुत्तरतः परिस्तरणभूमिमतिक्रम्य कुशत्रयमास्तीर्य तत्र सान्तरालमृत्पात्रस्थं बर्हिषाच्छादितं सर्वकार्यार्थमुदकं क्षीरं च ब्रह्मणो मुखमवलोक्य निदध्यात् । तत उपमूललूनबर्हिषां मुष्टिचतुर्थभागेनाग्नेयादीशानान्तं प्राच्यां, ब्रह्मणोऽग्निपर्यन्तं दक्षिणस्यां, नैर्ऋत्याद्वायव्यान्तं पश्चिमायाम्, अग्नितः प्रणीतापर्यन्तमुत्तरस्यां स्तरणं कुर्यात् । तत आसादनमग्नेरुत्तरतः प्रणीतापश्चिमे प्राक्संस्थं वा । तद्यथा पवित्रच्छेदनार्थं कुशत्रयं, पवित्रार्थमनन्तर्गर्भितं साग्रकुशपत्रद्वयं, प्रोक्षण्यर्थं मृत्पात्रं, आज्यार्थं ताम्रस्थाली, पायसचर्वर्थं मृत्तिकास्थाली, स्रुवसंमार्जनार्थं कुशत्रयम्, उपयमनार्थं वेणीरूपकुशत्रयम्, प्रादेशमितपलाशसमित्त्रयं, स्रुवः, आज्यं, तण्डुलं, दुग्धम्, एवमासाद्य । तदुत्तरतः पौष्णं सिद्धमेव पिष्टमयचरुं, ब्रह्मदक्षिणार्थं पूर्णपात्रं, होतृदक्षिणार्थं वस्त्रयुग्मसुवर्णकांस्यान्युपकल्पयेत् । ततो वाग्यत आ-

सादितकुशपत्रद्वयमादाय पवित्रच्छेदनकुशैः प्रादेशमात्रं प्रमाप्य छिन्द्यात् । तानपास्य पवित्राभ्यां प्रणीतोदकमुत्पूय सपवित्रकरेण प्रणीतोदकं त्रिः प्रोक्षण्यां निधाय उदगग्रे पवित्रे व्यस्तहस्तयोरङ्गुष्ठानामिकाग्राभ्यामनयोरादाय तन्मध्येन प्रोक्षण्युदकं भूमौ त्रिः क्षिप्त्वा पवित्रे प्रोक्षण्यां निधाय तत्पात्रं दक्षिणहस्तेनादाय वामे निधाय दक्षिणहस्ताङ्गुष्ठानामिकाभ्यां तज्जलं किञ्चिदूर्ध्वमुत्क्षिप्य प्रणीताजलेन प्रोक्षणीमभिषिच्य तज्जलेन यथासादितं द्रव्यं प्रत्येकं सकृत्प्रोक्ष्य पवित्रशेषजलसहितपात्रं प्रणीताग्न्योरन्तरे निधाय आज्यस्थाल्यामाज्यं निरूप्य चरुस्थाल्यां तण्डुलान्निःक्षिप्य प्रणीतोदकेन तांस्त्रिः प्रक्षाल्य तत्र प्रणीतोदकं दुग्धञ्च प्रक्षिप्य स्वयं चरुं ब्रह्मणा चाज्यं गृहीत्वा प्रदक्षिणीकृत्याग्निपूर्वेण नीत्वा दक्षिणत आज्यमुत्तरतः पायसं चरुं श्रपणार्थं युगपदग्नौ निधाय उल्मुकं सहविष्काग्नेः प्रदक्षिणं भ्रामयित्वा तत्रैव क्षिप्त्वा स्रुवस्य प्रागग्रस्यावाङ्मुखस्याग्नौ प्रतपनमुत्तानस्य संमार्जनकुशैरभ्यन्तरतोऽग्रान्मूलपर्यन्तं मध्येमध्यत एव मूलैर्बाह्यतो मूलादग्रपर्यन्तं संमार्जनं, प्रणीताद्भिरभ्युक्षणं, पुनः प्रतपनम् । आस्तृतबर्हिषि स्वपुरतः प्रागग्रस्य स्थापनं विधाय पाके वृत्ते स्वयमाज्यमुद्वास्याग्निपश्चिमेन नीत्वा प्रणीतोत्तरतः प्रथमं विधाय चरुं तथैवोद्वास्याज्यपश्चिमेन नीत्वा आज्यस्योत्तरतो निधाय स्वपुरतः स्रुवोत्तरे आज्यं तदुत्तरतश्चरुं निधाय प्रोक्षणीतः पवित्रे समानीय आज्ये प्रोक्षणीवदुत्पवनं कृत्वा पवित्रे प्रोक्षण्यां निधाय आज्यमवेक्ष्य सत्यपद्रव्ये तन्निरस्य प्रोक्षण्युत्पवनं विधाय पायसचरोरुत्तरतः पूर्वासि-

द्धपिष्टकचरुं निधाय होमसमाप्तिपर्यन्तमुपग्रहार्थं कुशैर्वामहस्ते उपग्रहं विधाय प्रजापतिं ( मनसा ) चिन्तयन्नुत्तिष्ठन् प्रागग्र-घृताक्तसमित्त्रयं (वह्नौ) प्रक्षिप्योपविश्य प्रोक्षण्यद्भिः सहविष्क-मग्निं प्रणीताब्रह्मसहितं पर्युक्ष्य पवित्रे प्रणीतासु निधाय प्रोक्ष-णीपात्रं स्वस्थाने निदध्यात् (१)। ततो ब्रह्मणा करबर्हिषान्वा-रब्धो दक्षिणं जानु नामयित्वा संस्रवं विनैवाज्येन जुहुयात्। स्वाहान्तो होमः। 'इदमग्नये' इति त्यागः। ॐ इह रतिः स्वाहा, इदमग्नये० १। ॐ इहरमध्व ँ स्वाहा, इदमग्नये० २। ॐ इह धृतिः स्वाहा, इदमग्नये० ३। ॐ इह स्वधृतिः स्वाहा, इद मग्नये० ४। ॐ उपसृजं धरुणं मात्रे धरुणो मातरं धयन् स्वाहा, इदम-ग्नये० ५। ॐ रायस्पोषमस्मासु दीधरत् स्वाहा, इदमग्नये० ६। ततः प्रागृक्त्वग्नेर्दक्षिणभागे मनसा—ॐ प्रजापतये स्वाहा, इदं प्रजापतये० १। अग्नेरुत्तरभागे ऋजुप्राक्—ॐ इन्द्राय स्वाहा, इदमिन्द्राय० २। तत उत्तरपूर्वार्द्धे—ॐ अग्नये स्वाहा, इदमग्न० १। दक्षिणपूर्वार्द्धे—ॐ सोमाय स्वाहा, इदं सो-माय० २। इत्याघारावाज्यभागौ संस्रवं हुत्वा पायसं पैष्टकमेक-मादाय समिद्धतमेऽग्नौ संस्रवं विनैव पायसेन जुहुयात्—ॐ अग्न-ये स्वाहा, इदमग्नये० १। ॐ रुद्राय स्वाहा, इदं रुद्राय० २। ॐ शर्वाय स्वाहा, इदं शर्वाय० ३। ॐ पशुपतये स्वाहा, इदं पशु-

---

( १ ) प्रायश्चित्ते विधिश्चैव पाकयज्ञे तु साहसः। इति शुद्धितत्त्वे गृह्यसङ्ग्रहवचनात् अत्र 'साहस'नामानमग्निं 'एतं ते'० इति प्रतिष्ठा-प्य, सम्पूज्य, द्रव्यदेवताभिध्यानं कुर्यात्। वृषोत्सर्गहोमस्य पाकसाध्य त्वात् पाकयज्ञत्वम्।

पतये० ४। ॐ उग्राय स्वाहा, इदमुग्राय० ५। ॐ अशनये स्वाहा, इदमशनये० ६। ॐ भवाय स्वाहा, इदं भवाय० ७। ॐ महादेवाय स्वाहा, इदं महादेवाय० ८। ॐ ईशानाय स्वाहा, इदमीशानाय० ९। इति हुत्वा पिष्टकेन-ॐ पूषा गाऽअन्वेतु नः पूषा रक्षत्वर्व्वतः। पूषा वाज ँ सनोतु नः स्वाहा, इदं पूष्णे० १। ततः पायसपिष्टकाभ्यामुत्तरार्द्धावदानभूताभ्याम्-ॐ अग्नये स्विष्टकृते स्वाहा, इदमग्नये स्विष्टकृते०। अग्नेर्मध्यभागे आज्येन-ॐ भूः स्वाहा, इदमग्नये० १। ॐ भुवः स्वाहा, इदं वायव० २। ॐ स्वः स्वाहा, इदं सूर्याय० ३। ॐ त्वन्नोऽअग्ने व्वरुणस्य व्विद्वान्देवस्य हेडो ऽअवयासिसीष्ठाः। यजिष्ठो व्वह्नितमः शोशुचानो व्विश्वाद्वेषाँसि प्रमुमुग्ध्यस्मत् स्वाहा, इदमग्नीवरुणाभ्यां० ४। ॐ स त्वन्नो ऽअग्ने व्वमो भवोती नेदिष्ठो अस्या ऽउषसो व्युष्टौ। अव यक्ष्व नो व्वरुणँ रराणो व्वीहि मृडीक ँ सुहवो न ऽएधि स्वाहा, इदमग्नीवरुणाभ्यां ५। ॐ अयाश्चाग्नेऽस्यनभिशस्तिपाश्च सत्वमित्वमया ऽअसि। अया नो यज्ञं वहास्यया नो धेहि भेषजँ स्वाहा, इदमग्नये० ६। ओं ये ते शतं व्वरुण ये सहस्रं यज्ञियाः पाशा व्वितता महान्तः। तेभिर्नो ऽअद्य सवितोत व्विष्णुर्व्विश्वे मुञ्चन्तु मरुतः स्वर्क्काः स्वाहा, इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यो न मम ७। ॐ उदुत्तमं व्वरुण पाशमस्मदवाधमं वि मद्ध्यमँ श्रथाय। अथा व्वयमादित्य व्व्रते तवानागसो ऽअदितये स्याम स्वाहा, इदं वरुणाय० ८। ॐ प्रजापतये स्वाहा, इदं प्रजापतये० ९। इति मनसा। एवं हुत्वा संस्रवप्राशनमाचमनं

च कृत्वा पवित्राभ्यां शिरसि संमार्जनम् 'ओं सुमित्रिया न आप ऽओषधयः सन्तु' इति मन्त्रेण ततः 'ॐ दुर्म्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च व्वयन्द्विष्मः' इति मन्त्रेण प्रणीतोदकमैशान्यां निनयेत् । ततः फलपुष्पान्वितघृतेन—

ॐ मूर्द्धानं दिवोऽअरतिम्पृथिव्या व्वैश्वानरमृत ऽआ जा- तमग्निम् । कविᳬसम्राजमतिथिं जानानामासन्ना पात्रं जनयन्त देवाः स्वाहा, इद मग्नये० ।

इति यजमानसहितो होता पूर्णाहुतिं कुर्यात् । ततः स्तरण- क्रमेण बर्हिरुत्थाप्याज्येनाभिघार्य्य,

ॐ देवा गातुविदो गातुं व्वित्वा गातुमित ।

मनसस्पत ऽइमं देव यज्ञᳬस्वाहा व्वाते धाः स्वाहा, इदमग्नये०

इति बर्हिर्होमं (हस्तेनैव) कुर्यात् । ततो यजमानः कुशत्रय- तिलजलान्यादाय-'ॐ अद्य कर्त्तव्यवृषोत्सर्गाङ्गभूतकृतैतद्धो- मकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्म्मप्रतिष्ठार्थमिदम्पूर्णपात्रं प्र- जापतिदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय ब्रह्मणे दक्षिणां तुभ्यमहं सम्प्रददे' इति ब्रह्मणे दक्षिणां दद्यात् । 'ॐ स्वस्ति' इति प्रतिवचनम् । यजमानेन तत्परितोषार्थं किंचिद्दातव्यम् । ततो वस्त्रयुग्मसुवर्णकांस्यान्युपनीय कुशादीन्यादाय-'ॐ अद्य कर्त्तव्यवृषोत्सर्गाङ्गभूतकृतैतद्धोमकर्मप्रतिष्ठार्थमेतानि वस्त्रयुग्मसु- वर्णकांस्यानि बृहस्पतिवह्निचन्द्रदैवत्यानि अमुकगोत्रायामुकश- र्मणे ब्राह्मणाय होत्रे दक्षिणां तुभ्यमहं सम्प्रददे' इति होत्रे दक्षिणां दद्यात् । 'ॐ स्वस्ति' इति प्रतिवचनम् । ततो रुद्राध्या-

यं(१) जपित्वा कर्मकारमाहूय 'वृषभमङ्कय' इति ब्रूयात् । स चाग्रिमपाददक्षिणपार्श्वे चक्रेण, पश्चिमपादवामपार्श्वे त्रिशूलेन वृषभमङ्कयेत् (२) । ततो वत्सतरीचतुष्टयसहितं वृषभं कुशजलेन स्नापयेत् । तत्र स्नानकरणमन्त्राः—

'ॐ हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः ।
या अग्निं गर्भं दधिरे(३) सुवर्णास्ता न ऽआपः शꣳ स्योना भवन्तु ॥
ॐ यासां राजा वरुणो याति मध्ये सत्याऽनृते ऽअवपश्यञ्जनानाम् ।
या ऽअग्निं गर्भं दधिरे सुवर्णास्तान ऽआपः शꣳ स्योना भवन्तु ॥
ॐ यासां देवा दिवि कृण्वन्ति भक्षं या ऽअन्तरिक्षे बहुधा भवन्ति ।
या ऽअग्निं गर्भं दधिरे सुवर्णास्ता न ऽआपः शꣳ स्योना भवन्तु ॥
ॐ शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोपस्पृशत त्वचं मे ।

---

(१) गदाधरेण तु नवकण्डिकाभाष्ये अस्मिन्नेवावसरे 'अश्वत्थपत्रयुक्तकलशे रुद्रमावाह्य गन्धादिभिः सम्पूज्य हस्तेन कलशं स्पृशन् रुद्राध्यायं जपेत्' इति विशेष उक्त अतः कर्त्तव्य इति ।

(२) शुद्धितत्त्वे छन्दोगपरिशिष्टे—

ततोऽरुणेन गन्धेन 'मानस्तोक' इतीरयन् ।
वृषस्य दक्षिणे पार्श्वे त्रिशूलाङ्कं समुल्लिखेत् ॥
'वृषाह्यसीति' सव्येऽस्य चक्राङ्कमपि दर्शयेत् ।
तप्तेन पश्चादयसा स्पष्टौ तावेव कारयेत् ॥ इति ।

ॐ मा नस्तोके तनये मा न ऽआयुषि मा नो गोषु मा नो ऽअश्वेषु रीरिषः ।
मा नो व्वीरान् रुद्र भामिनो व्वधी र्हविष्मतः सदमित्त्वा हवामहे ॥
ॐ वृषा ह्यसि भानुना द्युमन्तं त्वा हवामहे ।
पवमानः स्वर्दृशः ॥ इति द्वौ मन्त्रौ ।

(३) 'विरूपास्ता' इ० पा० ।

घृतश्च्युतः शुचयो याः पावकास्ता न ऽआपः श ᳪ स्योना भवन्तु ॥
ॐ शन्नो देवीरभिष्टय ऽआपो भवन्तु पीतये । शं योरभि स्रवन्तु नः ।

ततो लौहघण्टिकानूपुरकनककपर्दिकादिभिः पञ्चाप्यलंकृत्य सावित्रीमघमर्षणं, रुद्राध्यायं, पुरुषसूक्तं,

ॐ यद्देवा देवहेडनं देवासश्चकृमा व्वयम् ।
अग्निर्मा तस्मादेनसो व्विश्वान्मुञ्चत्वᳪ हसः ॥
यदि दिवा यदि नक्तमेनाᳪसि चकृमा व्वयम् ।
व्वायुर्मा तस्मादेनसो व्विश्वान्मुञ्चत्वᳪहसः ॥
यदि जाग्रद्यदि स्वप्न ऽएनाᳪसि चकृमा व्वयम् ।
सूर्यो मा तस्मादेनसो व्विश्वान्मुञ्चत्वᳪहसः ॥

इति ऋक्त्रयं कूष्माण्डीश्च जपेत् । ततो वृषभस्य दक्षिणकर्णे 'ॐ पिता वत्सानां पतिरघ्न्यानामथो पिता महतां गर्गराणाम् । वत्सो जरायुप्रतिधुक् पीयूषआमिक्षा घृतं तद्वस्यरेतः ॥

ॐ वृषो हि भगवान्धर्मश्चतुष्पादः प्रकीर्तितः ।
वृणोमि (१)त्वामहं भक्त्या स मां रक्षतु सर्वतः' ॥

इति मन्त्रद्वयं जपित्वा कुशत्रयतिलजलान्यादाय—'ॐ अद्याशौचान्ताद्द्वितीयेऽह्नि अमुकगोत्रस्य पितुरमुकप्रेतस्य मोक्षकामो रुद्रदैवतं वृषं 'एतं युवानं पतिं वो ददामि तेन क्रीडन्तीश्चरथ प्रियेण । मा नः साप्तजनुषा सुभगा रायस्पोषेण समिषा मदेम' इत्युत्सृजेत् ।

लोहितो यस्तु वर्णेन पुच्छाग्रेण तु पाण्डुरः ।
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते ॥

---

(१) 'त' इ० पा० ।

नीलवृषे नीलपदप्रक्षेपः । कार्त्तिक्यां वृषोत्सर्गे वृषोत्सर्ग-निमित्तकमाभ्युदयिकश्राद्धं कृत्वा—ॐ अद्य कार्त्तिक्यां वृषमुत्सृज्यमानोऽहमिमानपूपान् विष्णुदैवत्यानमुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे' इति अपूपत्रयं ब्राह्मणाय दद्यात् । दक्षिणां च दद्यात् । कार्त्तिक्यामपूपान्दत्त्वा—ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य मोक्षकामो रुद्रदैवत्यं वृषभं 'एतं युवानं पतिं वो ददामि तेन क्रीडन्तीश्चरथ प्रियेण । मा नः साप्तजनुषा सुभगा रायस्पोषेण समिषा मदेम' इति वाक्यं वक्तव्यम् । "एतयैवोत्सृजेरन्" इति पारस्करवचनात् अनयैव ऋचोत्सर्गः । ऋगर्थस्तु—

हे वत्सतर्यो वो युष्माकमेतं पतिं स्वामिनं युवानं तरुणं ददामि त्यजामि । तेनैतेन वृषेण सह क्रीडन्तीः खेलन्त्यश्चरथ भ्रमथ । यूयमपि हे वत्सतर्यो ? मातरः नोऽस्माकं मा नोऽस्मत्स्वत्वविषयाः किन्तु मया त्यक्ताः । वयं वृषस्य भवतीनां च त्यागेन रायस्पोषेण धनसमृद्ध्या साप्तजनुषा सप्तजन्मव्यापकेन इषा अन्नेन संमदेम हृष्टा भवेम । सुभगाः लोकस्य प्रियाः ।

इति ऐशान्यां दिशि पश्चापि चालयेत् । पश्चापि पूजयेत् । एषोऽर्घः 'ॐ सोपकरणवत्सतरीचतुष्टयसहिताय वृषाय नमः' इदमनुलेपनं 'ॐ सोपकरणवत्सतरीचतुष्टयसहितवृषाय नमः' । पुष्पैः पूजयेत् । एतानि धूपदीपनैवेद्यताम्बूलानि 'ॐ सोपकरणवत्सतरीचतुष्टयसहितवृषाय नमः' । ततो वत्सतरीचतुष्टयमध्यगतं वृषभमभिमन्त्रयेत् । तत्र मन्त्राः—

ॐ मयोभूरभि मा व्वाहि स्वाहा मारुतोऽसि मरुतां गणः

शम्भूर्मयोभूरभि मा व्वाहि स्वाहा वस्यूरसिदुवस्वाञ्छम्भूर्मयो भूरभि मा व्वाहि स्वाहा ॥

यास्ते ऽअग्ने सूर्य्ये रुचो दिवमातन्वन्ति रश्मिभिः ।
ताभिर्न्नो ऽअद्य सर्व्वाभी रुचे जनाय नस्कृधि ॥
या वो देवाः सूर्य्ये रुचो गोष्वश्वेषु या रुचः ।
इन्द्राग्नी ताभिः सर्वाभी रुचन्नो धत्त बृहस्पते ॥
रुचन्नो धेहि ब्राह्मणेषु रुचᳬ राजसु नस्कृधि ।
रुचं विश्येषु शूद्रेषु मयि धेहि रुचा रुचम् ॥

तत्त्वा यामि ब्रह्मणा व्वन्दमानस्तदाशास्ते यजमानो हविर्भिः अहेडमानो व्वरुणेह बोध्युरुशᳬसमा नऽआयुः प्रमोषीः ॥ स्वर्ण घर्म्मः स्वाहा स्वर्णार्क्कः स्वाहा स्वर्ण शुक्रः स्वाहा स्वर्ण ज्योतिः स्वाहा स्वर्ण सूर्य्यः स्वाहा ॥

ततः कृतापसव्यो दक्षिणामुखो वामजानुं पातयित्वा यवतिलवृषपुच्छपोटकादीन्यादाय ताम्रपात्रादिना मन्त्रस्थं फलमुद्दिश्याञ्जलित्रयेण तर्प्पयेदनेन मन्त्रेण—

ॐ स्वधा पितृभ्यो मातृभ्यो (१)बन्धुभ्यश्चापि तृप्तये ।
मातृपक्षाश्च ये केचिद्ये चान्ये पितृपक्षजाः ॥
गुरुश्वशुरबन्धूनां ये कुलेषु समुद्भवाः ।
ये प्रेतभावमापन्ना ये चान्ये श्राद्धवर्जिताः ॥
वृषोत्सर्गेण ते सर्वे लभन्तां प्रीतिमुत्तमाम् ॥ इति ।

ततः कर्मकारमाहूयाभिमतवेतनं तस्मै दद्यात् । उत्सृष्टा ब्राह्मणान् श्रावयेत्—'यत्किंचिद्द्विजने मयोत्सृष्टं तदन्यो न नयेत्

(१) 'पशुभ्यश्चापि' इ० पा० ।

न वाह्यं न चैतत्क्षीरं पातव्यं केनचित्किंचित्कचित्' । ततो रुद्राग्रे बहुसर्पिष्कं पायसं ब्राह्मणान्भोजयेत् ।

अथ कपिलादानम्—'ॐ सोपकरणायै सवत्सकपिलागव्यै नमः' 'ॐ ब्राह्मणाय नमः' इति देयद्रव्यब्राह्मणौ त्रिःसम्पूज्य 'ॐ इमां सोपकरणां सवत्सां कपिलां गां ददानि' इति द्विजकरे जलदानम् । जलेन देयद्रव्याभिषेचनम् । कुशादीन्यादाय—ॐ अद्याशौचान्तद्वितीयेऽह्नि अमुकगोत्रस्य पितुरमुकप्रेतस्य स्वर्गप्राप्तिकामः इमां कपिलां गां हेमशृङ्गीं रौप्यखुरां वस्त्रयुगच्छन्नां कांस्योपदोहां मुक्तालाङ्गूलभूषितां सवत्सां रुद्रदैवत्याममुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे' इति दद्यात् । 'ॐ स्वस्ति' इति प्रतिवचनम् । ततो दक्षिणाद्रव्यादिकमादाय—'ॐ अद्य कृतैतत्सोपकरणसवत्सकपिलागविदानप्रतिष्ठार्थमिदं हिरण्यमग्निदैवत्यममुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणां तुभ्यमहं सम्प्रददे' इति दक्षिणां दद्यात् । ततः प्रतिगृहीता 'ॐ स्वस्ति' इत्युक्त्वा गोपुच्छग्रहणं, यथाशाखं कामस्तुतिं च कुर्यात् । तत्र—

ॐ कोदात्कस्माऽअदात्कामोदात्कामायादात् ।
कामो दाता कामः प्रतिग्रहीता कामैतत्ते ॥

इति यजुर्वेदे,

ॐ क इदं कस्मा अदात् कामः कामायादात् कामो दाता कामः प्रतिग्रहीता कामस्समुद्रमाविशत् ।
कामेन त्वा प्रतिगृह्णामि कामैतत्ते ॥

इति सामवेदे कामस्तुतिः । यथोक्तकपिलाऽलाभे केवला-

अपि दद्यात् । तत्र पूजादि पूर्ववत् । 'ॐ अद्याशौचान्तद्वितीयेऽह्नि अमुकगोत्रस्य पितुरमुकप्रेतस्य स्वर्गप्राप्तिकामः इमां गां रुद्रदैवत्याम् अमुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे' इति दद्यात् । 'ॐ स्वस्ति' इति प्रतिवचनम् । ततो दाक्षिणाद्रव्यमादाय–'ॐ अद्य कृतैतद्गोदानप्रतिष्ठार्थमिदं हिरण्यमग्निदैवत्यममुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणां तुभ्यमहं संप्रददे' इति दक्षिणां दद्यात् । 'ॐ स्वस्ति' इति प्रतिवचनम् । गोपुच्छग्रहणं, कामस्तुतिश्च पूर्ववत् । ततो महानद्यादौ सचैलं स्नात्वा तीर्थानि मनसा ध्यात्वा तज्जलेनात्मानमभ्युक्ष्योत्तरेत् ।

अथैकादशाहश्राद्धप्रयोगः–स च सुगतिसोपानानुसारेण लिख्यते–तत्र मध्याह्ने शुचिराचान्तः शुक्लद्विवासाः गोमयोपलिप्तायामपसव्यवत्कृतगोमूत्रमण्डलायां भूमौ मण्डलाद्बहिः 'ॐ भूम्यै नमः' इति त्रिःपुष्पाक्षतपूजितायां भूमौ दर्भेषु तिष्ठन् पात्रब्राह्मणं यजमानसवर्णेनाऽऽहूतं स्नातमाचान्तम् 'ॐ स्वागतम्' इति पृच्छेत् 'ॐ सुस्वागतम्' इति तेनोक्ते उभावप्युपविशतः । ततः श्राद्धकर्ता 'इदं ते पाद्यम्' इति पाद्यमुपनीय विनीतः सन् पुनः पुनरभिनन्द्य पात्रब्राह्मणपादौ प्रक्षाल्यापसव्यादि कृत्वा जलतिलगन्धपुष्पयुतमर्घपात्रमादाय मोटकतिलजलानि चादाय–'ॐ आद्यामुकगोत्र पितरमुकप्रेत आद्यश्राद्धे एष पादार्घस्ते मया दीयते तवोपतिष्ठताम्' इति पादार्घं दद्यात् । ततः शिरसाभिवन्द्य जानुनि विश्राम्य 'ॐ इदं ते आचमनीयम्' इत्याचमनीयोदकं ब्राह्मणाय दद्यात् । ततः स्वयं पादौ प्रक्षाल्याचम्य पात्रब्राह्मणमग्रे कृत्वा श्राद्धदेशमागत्योपविश्याज्ञाभिप्रायेण 'सिद्धम्' इति पृच्छेत् ।

पूर्वरात्रौ निमन्त्रणासम्भवे तस्मिन्नेवाह्नि श्राद्धवेलायां मण्डपाद्बहिश्शुचिराचान्तः शुक्लद्विवासा गोमयोपलिप्तायामपसव्यवत्क्षिप्तगोमूत्रमण्डलायां मण्डलाद्बहिः 'ॐ भूम्यै नमः' इति त्रिः पुष्पाक्षतपूजितायां ( भूमौ ) दर्भेषु तिष्ठन्स्नातमाचान्तं ब्राह्मणं यजमानसवर्णेनाऽऽहूतम् 'ॐ स्वागतम्' इति पृच्छेत् 'ॐ सुस्वागतम्' इति तेनोक्ते उभावप्युपविशतः । ततः श्राद्धकर्ता 'इदं ते पाद्यम्'इति पाद्यमुपनीय विनीतः सन् पुनः पुनरभिनद्य पात्रब्राह्मणपादौ प्रक्षाल्यापसव्यादि कृत्वा पुष्पचन्दनताम्बूलादि ब्राह्मणाय दत्वा ब्राह्मणदक्षिणजानुं स्पृष्ट्वा 'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्याद्य श्राद्धकरणाय भवन्तं ब्राह्मणमहमामन्त्रये' इत्युक्ते 'ॐ आमन्त्रितोऽस्मि' इति प्रतिवचनम् ।

अक्रोधनेन शौचपरेण सततं ब्रह्मवादिना ।
भवितव्यं च भवता मया च श्राद्धकारिणा ॥
सर्वायासविनिर्मुक्तेन कामक्रोधविवर्जितेन ।
भवितव्यं भवता नोऽद्यतने श्राद्धकर्मणि ॥

इति ब्राह्मणं नियमाञ्छ्रावयेत् । 'भवितव्यम्'इति तेनोक्ते अर्घं परिकल्प्यादाय मोटकादिकं चादाय-'ॐ अद्यामुकगोत्र पितरमुकप्रेत आद्यश्राद्धे एष पादार्घस्ते मया दीयते तवोपतिष्ठताम्'इति पादार्घं दद्यात् । ततः शिरसाभिवन्द्य जानुनी विश्राम्य 'ॐ इदं ते आचमनीयम्'इत्याचमनीयजलं ब्राह्मणाय दद्यात् । ततस्तिलतैलेन पात्रब्राह्मणपादावाजानु अभ्यञ्जयेत् । ततः स्वयं पादौ प्रक्षाल्याचम्य पात्रब्राह्मणमग्रे कृत्वा श्राद्धदेशमागत्योपविश्यान्नाभिप्रायेण 'सिद्धम्' इति पृच्छेत् । दक्षि-

णाग्रैककुशसहितनेपालकम्बलाद्यात्मकं ब्राह्मणोपवेशनायास-नमुपकल्प्यासनं स्पृशन्—

ॐअत्रासने(१)देवराजाभ्यनुज्ञातो विश्रम्यतां द्विजवर्यानुग्रहात्। प्रसादयेत्वासनं गृहाण पूतं ज्ञानाग्निपूतेन करेण विप्र' ॥

इति पठित्वा पात्रब्राह्मणं दक्षिणहस्तेन धृत्वोदङ्मुखमुपवेशयेत्। ततः पात्रब्राह्मणस्य पादयोस्तले दक्षिणाग्रकुशत्रयं दद्यात्। आसनसमीपे च तिलतैलेन घृतेन वा श्राद्धसमाप्तिपर्यन्तस्थायिनं दीपं कुर्यात्। तद्रक्षा पात्रब्राह्मणेन कर्तव्या। रक्षोघ्नान् गौरसर्षपान्, तिलांश्च श्राद्धदेशे सन्निधापयेत्। काककुक्कुटादीञ्छ्राद्धहन्तॄनपसारयेत्। ततः पूर्वाभिमुखः कुशोदकेन।

ॐ अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा।
यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥

इति पठित्वा 'ॐ पुण्डरीकाक्षः पुनातु' इति पुण्डरीकाक्षं स्मृत्वा श्राद्धीयद्रव्याण्यात्मानं च सिञ्चेत्। ततः कुशत्रयतिलजलान्यादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य प्रेतत्वविमुक्तिकामः आद्यादीनि यथाकालं षोडशश्राद्धान्यहं करिष्ये' इति सङ्कल्पयेत्। एकादशमासाभ्यन्तरेऽधिकमासपाते षोडशपदस्थाने सप्तदशपदं प्रयोज्यम्। ततः कुशत्रयतिलजलान्यादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य प्रेतत्वविमुक्तिहेतुकषोडशश्राद्धान्तर्गताद्यश्राद्धमहं करिष्ये' इति सङ्कल्पयेत्। 'ॐ कुरुष्व' इति ब्राह्मणप्रतिवचनम् 'ॐ गायत्रीजपमहं करिष्ये' इति पृष्ट्वा 'कुरुष्व' इति ब्राह्मणानुज्ञातः त्रिर्गायत्रीं जपेत्। सव्याहृतिका

(१) 'देवराज राजन्यशासनेन' क० ख०।

सप्रणवा च जपनीया गायत्री।

ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च।
नमः स्वाहायै स्वधायै नित्यमेव नमो नमः॥

इति त्रिर्जपेत्। ततोऽपसव्यं कृत्वा दक्षिणाभिमुखः पातितवामजानुर्मोटकतिलजलान्यादाय—'ॐ अद्यामुकगोत्र पितरमुकप्रेत आद्यश्राद्धे इदमासनं ते मया दीयते तवोपतिष्ठताम्' इति मोटकरूपमासनं तिलजलप्रोक्षितं दक्षिणाग्रमुत्सृजेत्। ततः सव्यं कृत्वा प्राङ्मुख उपविष्टः 'ॐ छत्राय नमः' 'ॐ ब्राह्मणाय नमः' इति देयब्राह्मणौ त्रिः सम्पूज्य 'इदं छत्रं ते ददानि' इति द्विजकरे जलं दत्त्वा छत्रमभिषिच्य कुशत्रयतिलजलान्यादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्यावरणकाम इदं छत्रमुत्तानाङ्गिरोदैवत्यममुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे' इति दद्यात्। 'ॐ स्वस्ति' इति प्रतिवचम्। ततस्तिलजलकुशान् दक्षिणाद्रव्यं चादाय-'ॐ अद्य कृतैतच्छत्रदानप्रतिष्ठार्थमिदं हिरण्यमग्निदैवत्यममुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणां तुभ्यमहं सम्प्रददे' इति दक्षिणां दद्यात्। ततः प्रतिगृहीता 'ॐ स्वस्ति' इत्युक्त्वा छत्रदण्डे धारयेत्। 'ॐ उपानद्भ्यां नमः' 'ॐ ब्राह्मणाय नमः' इति देयब्राह्मणौ त्रिः संपूज्य 'ॐ इमे उपानहौ ददानि' इति द्विजकरे जलदानमुपानहावभिषिच्य कुशादीन्यादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य तप्तवालुकासिकण्टकितभूदुर्गसन्तरणकाम इमे उपानहावुत्तानाङ्गिरोदैवते अमुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे' इति दद्यात्। 'ॐ स्वस्ति' इति प्रतिवचनम्। ततः कुशादीनि दक्षि-

णाद्द्रव्यं चादाय—'ॐ अद्य कृतैतदुपानद्दानप्रतिष्ठार्थमिदं हिरण्यमग्निदैवत्यममुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणां तुभ्यमहं सम्प्रददे' इति दक्षिणां दद्यात् । ततः प्रतिगृहीता 'ॐ स्वस्ति' इत्युक्त्वा उपानहावारोहेत् । ततोऽपसव्यं कृत्वा दक्षिणाभिमुखः पातितवामजानुः 'ॐ अपहताऽअसुरा रक्षाᳪसि वेदिषदः' इति ( श्राद्धदेशे ) वामावर्तेन तिलान्विकीर्य्य—

ॐ आ यन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः ।
अस्मिन्यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान् ॥

इति जपेत् । ततोऽर्घपात्रोपरि अनखच्छिन्नं दक्षिणाग्रं पवित्रं धृत्वा—

ॐ शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये ।
शं योरभि स्रवन्तु नः ॥ इति मन्त्रेणार्घपात्रे जलं दत्त्वा—
ॐ तिलोऽसि सोमदेवत्यो गोसवे देवनिर्मितः ।
प्रत्नमद्भिः पृक्तः स्वधया पितॄँल्लोकान्प्रीणाहि नः स्वाहा ॥

इति तिलान्प्रक्षिप्य गन्धपुष्पे तूष्णीं तत्र प्रक्षिप्य अर्घपात्रं वामहस्ते कृत्वा, पवित्रं ब्राह्मणहस्ते उत्तराग्रं दत्त्वा, तदुपरि किंचिदुदकान्तरं दत्त्वा—

ॐ या दिव्या आपः पयसा संबभू-
वुर्याऽअन्तरिक्षाऽउत पार्थवीर्याः ।
हिरण्यवर्णा यज्ञियास्तानऽआपः-
शिवाः शᳪस्योना सुहवा भवन्तु ॥

इति पठित्वा मोटकादीन्यादाय—'ॐ अद्यामुकगोत्र पितरमुकप्रेत आद्यश्राद्धे एष हस्तार्घस्ते मया दीयते तवोपतिष्ठताम्'

इति ब्राह्मणकरे पवित्रोपरि अर्घजलं ददद्युत्सृजेत्। पात्रं च वामपार्श्वे 'पित्रे स्थानमसि' इत्यर्घपात्रं सपवित्रमधोमुखं स्थापयेत्। तच्च दक्षिणादानपर्यन्तं न चालयेत्। ततः श्राद्धदेशे तिलान् विकीर्य दर्भहस्तो भूतले प्रेतमाह्वयेत। तत्र मन्त्रः—

ॐ इह लोकं परित्यज्य गतोऽसि परमां गतिम्। इति।

अत्र स्त्रीश्राद्धेऽपि 'गतोऽसि' इत्येवमेव पठनीयमात्मत्वेनोद्देश्यत्वात्। ततो मोटकादीन्यादाय—'ॐ अद्यामुकगोत्र पितरमुकप्रेत आद्यश्राद्धे एतानि गन्धपुष्पधूपदीपताम्बूलयज्ञोपवीतवासांसि ते मया दीयन्ते तवोपतिष्ठन्ताम्' इति गन्धादीनुत्सृजेत्। ततः 'सर्वसुगन्ध' इति मन्त्रेण गन्धान्, 'ॐ श्रिया दिव्या' इति मन्त्रेण पुष्पम्, 'ॐ वनस्पतिरसो०' इति मन्त्रेण धूपं ब्राह्मणाय निवेदयेत्। तत 'ॐ एष दीपः' इति निवेदिते 'ॐ सुदीपः' इति ब्राह्मणो वदेत। 'ॐ एतानि ताम्बूलानि' इति निवेदिते 'ॐ सुताम्बूलानि' इति ब्राह्मणो वदेत। 'ॐ इमे यज्ञोपवीते' इति निवेदिते 'ॐ सुयज्ञोपवीते' इति ब्राह्मणो वदेत्। 'ॐ एतानि वासांसि' इति निवेदिते 'ॐ सुवासांसि' इति ब्राह्मणो वदेत्। पुष्पाणि शिखायामेव द्विजेन धार्याणि। ततः प्रेतोपभुक्तशय्यासनादिकं गन्धपुष्पैरभ्यर्च्य श्राद्धभोक्त्रे प्रतिपादयेत्। ततो गौरमृत्तिकया नीवारचूर्णेन जलेन वा ब्राह्मणं वेष्टयित्वा चतुरस्रं मण्डलं कुर्यात्। परकीयभूमौ श्राद्धकरणे श्राद्धीयवस्तुषु किञ्चिदुद्धृत्य तिलजलघृतयुक्तमन्नम्—ॐ इदमन्नमेतद्भूस्वामिपितृभ्यो नमः' इति दद्यात्। जीवतां भूस्वामिनां किञ्चिद्दाननिष्करं दद्यात्। तत उष्णमन्नं ताम्रपात्रेण कराभ्या-

मादाय मनाक् स्थित्वा पितरं ध्यात्वा पुरुषतृप्तिक्षमं परिविष्यात् । तत 'इदं मधुरमिदमुष्णम्' इत्यादि व्यञ्जनगुणानुत्कीर्तयन् मांसादीनि व्यञ्जनानि भूयिष्ठपात्रान्तरेषु परिविष्य घृतं सतिलजलं चोपनीय अन्नं मधुनाऽभिघारयेत् ।

ॐ मधुव्वाताऽऋतायते मधु क्षरन्ति सिन्धवः ।
माध्वीर्न्नः सन्त्वोषधीः ॥
मधु नक्तमुतोषसो मधुमत्पार्थिवꣳरजः ।
मधु द्यौरस्तु नः पिता ॥
मधुमान्नो व्वनस्पतिर्मधुमाꣳअस्तु सूर्य्यः ।
माध्वीर्ग्गावो भवन्तु नः ॥

'ॐ मधु मधु मधु' इति पठित्वा व्यस्ताभ्यां पाणिभ्यां पात्रमालभ्य 'ॐ पृथ्वी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतञ्जुहोमि स्वाहा' इति जपेत् ।

ॐ इदं विष्णुर्व्वि चक्रमे त्रेधा नि दधे पदम् ।
समूढमस्य पाꣳसुरे ॥

इति पठन्नमृतरूपतयान्नं विचिन्त्य 'ॐ कृष्ण कव्यमिदं रक्ष मदीयम्' इति पठित्वा 'ॐइदमन्नम्' 'ॐइमा आपः' 'ॐइदमाज्यम्' 'ॐइदं हविः' इति पात्रब्राह्मणदक्षिणाङ्गुष्ठमन्नजलघृतान्नेषु निवेश्य 'ॐ अपहताऽअसुरा रक्षाꣳसि व्वेदिषदः' इत्यन्नोपरि बहून् तिलान्प्रक्षिप्य मोदकादीन्यादाय वामेन पाणिना पात्रमत्यजन्—'ॐ अद्यामुकगोत्र पितरमुकमेत आद्यश्राद्धे इदमन्नं सोपकरणं ते मया दीयते तवोपतिष्ठताम्' इत्युत्सृजेत् । ततो 'भवान् प्राशय' इति ब्रूयात् । विप्रायापोशानं दत्वा समणवां सव्याहृतिकां गा-

यत्रीम् 'ॐ मधुव्वाता०' इत्यादितृचम् , 'ॐ मधु मधु मधु' इति च जपित्वा ।

ॐ अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत् ।
तत्सर्वमच्छिद्रमस्तु ॥

इति पठित्वा 'ॐ यथासुखं जुषस्व' इति ब्राह्मणं ब्रूयात् । ब्राह्मणश्च वामेन पाणिना पात्रमत्यजन ॐ कारपूर्वकं भुञ्जीत । संज्ञयाऽपि भक्ष्यप्रार्थनं न कुर्यात् । श्राद्धकर्ता दर्भेष्वासीनः सप्रणवव्याहृतिकां गायत्रीं, 'मधुव्वाता०' इत्यादितृचं, 'ॐ मधु मधु मधु' इति च जपेत् । गायत्रीं ब्राह्मणं श्रावयित्वा(१) 'ॐ कृणुष्व पाजः, इत्यादीन् रक्षोघ्नमन्त्रान् पठित्वा भूमिं तिलैरास्तीर्य ब्राह्मणं पितृरूपतया ध्यायेत् । तत 'ॐ उदीरताम्' इत्यादि पितृमन्त्रान् , 'ॐ सहस्रशीर्षा' इत्यादिपुरुषसूक्तम् , 'ॐ आशुः शिशानः' इत्यादिकमप्रतिरथमन्यान्यपि शतरुद्रियप्रभृतिपवित्राणि, रुचिस्तवप्रभृतीनि च पठेत् । अन्ततः—

---

(१) कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ२ऽइभेन ।
तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥
तव भ्रमास ऽआशुया पतन्त्यनुस्पृश धृषता शोशुचानः ।
तपूँष्यग्ने जुह्वा पतङ्गानसन्दितो विसृज विष्वगुल्काः ॥
प्रतिस्पशो विसृजतूर्णितमोभवा पायुर्विशो ऽअस्या ऽअदब्धः ।
योनो दूरे ऽअघशँसो यो ऽअन्त्यग्ने मा किष्टे व्यथिरादधर्षीत् ॥
उदग्ने तिष्ठ प्रत्यातनुष्व न्यमित्राँ२ ओषतात्तिग्महेते ।
यो नो अरातिँ समिधानचक्रे नीचा तं धक्ष्यतसं न शुष्कम् ॥
ऊर्ध्वो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने ।
अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्रमृणीहि शत्रून् ।
अग्नेष्ट्वा तेजसा सादयामि ॥

ॐ नमस्तुभ्यं विरूपाक्ष नमस्तेऽनेकचक्षुषे ।
नमः पिनाकहस्ताय वज्रहस्ताय वै नमः ॥

इति श्लोकमपि पठेत् । वीणादिभिर्ब्राह्मणं हर्षयन्व्यञ्जनादिगुणान् कीर्तयन् तस्य यत्र यत्रेच्छोपलभ्यते तत्तदुपनयन्मन्दं मन्दं भोजयेत् । ततस्तं तृप्तं ज्ञात्वा उच्छिष्टसन्निधावास्तृतदक्षिणाग्रकुशत्रयं भूमिं प्रोक्ष्य सर्वप्रकारकमन्नं तिलघृतसहितं जलेनाप्लाव्य गृहीत्वा—

ॐ अनग्निदग्धा ये जीवा ये प्रदग्धाः कुले मम ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥

इति मन्त्रेण मन्त्रस्थफलमुद्दिश्य कुशोपरि तदन्नं विकिरेत् । ततः सव्यं कृत्वाऽऽचम्य हरिं स्मृत्वा अपसव्यं कृत्वा दक्षिणाभिमुखो ब्राह्मणाय 'जलगण्डूषमिदं ते मत्यापोशानं' इति दत्वा 'ॐ स्वदितम्' इति ब्राह्मणं पृच्छेत् । 'ॐ सुस्वदितम्' इति तेनोक्ते 'ॐ पिण्डमहं करिष्ये' इति पृच्छेत् । 'कुरुष्व' इति ब्राह्मणानुज्ञातः उच्छिष्टसन्निधौ चतुरस्रं हस्तैकप्रमाणं दक्षिणप्लवं चतुरङ्गुलोच्छ्रितं स्थानं निर्माय तन्मध्ये वामहस्तेन दर्भपिञ्जलीमादाय तन्मूलेन वामान्वारब्धदक्षिणकरेण प्रादेशमात्रं लिखेत् । 'ॐ अपहताऽअसुरा रक्षाꣳसि वेदिषदः' इति मन्त्रेण रेखामुल्लिख्य दर्भपिञ्जलीमुत्तरस्यां दिशि निःक्षिपेत् । तदुपरि—

ॐ ये रूपाणि प्रतिमुञ्चमानाऽअसुराः सन्तः स्वधया चरन्ति ।
परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात् ॥

इत्युल्मुकं भ्रामयित्वा रेखादक्षिणतः क्षिपेत् । तदुपरि उप-

मूलसकृल्लून कुशान्दक्षिणाग्रानास्तीर्य सव्यं कृत्वा 'ॐ देव-ताभ्य०' इति त्रिर्जपेत् । ततोऽपसव्यं कृत्वा पर्णपुटकादिकमेकं तिलजलगन्धपुष्पयुतं वामहस्ते कृत्वा दक्षिणहस्तेन मोटकादि-कमादाय—'ॐ अद्यामुकगोत्र पितरमुकप्रेत आद्यश्राद्धे पिण्डस्थाने-ऽत्रावनेनिक्ष्व ते मया दीयते तवोपतिष्ठताम्' इति कुशोपरि अव-नेजनं दद्यात् । ततः श्राद्धशेषमन्नं सर्वव्यञ्जनतिलमधुघृतयुतमे-कीकृत्य तेन बिल्वपरिमाणपिण्डं निर्माय घृतमध्वभिघारितं कृत्वा दक्षिणहस्तेनादाय मोटकादींश्चादाय—'ॐ अद्यामुकगोत्र पितरमुकप्रेत आद्यश्राद्धे एष पिण्डस्ते मया दीयते तवोपतिष्ठ-ताम्' इति कुशोपरि अवनेजनस्थाने सव्येन गृहीतदक्षिणकरेण पिण्डं दद्यात् । आस्तृतदर्भमूले करं प्रोञ्छ सव्यं कृत्वाऽऽचम्य हरिं स्मृत्वा अपसव्यं कृत्वा 'ॐ अत्र पितर्मादयस्व यथाभाग-मावृषायस्व' इति पठित्वा वामावर्तेनोदङ्मुखो भूत्वा मनाक् श्वासं नियम्य तेनैव यथासुखं पर्यावर्तयन् पितरं भास्वरमूर्तिं ध्यायन् 'ॐ अमीमदन्त पिता यथाभागमावृषायिष्ट' इति पठेत् । अवनेजनावशिष्टजलयुतपात्रं वामहस्ते कृत्वा दक्षिणहस्तेन मोट-कादीन्यादाय—'ॐ अद्यामुकगोत्र पितरमुकप्रेत आद्यश्राद्ध-पिण्डेऽत्र प्रत्यवनेनिक्ष्व ते मया दीयते तवोपतिष्ठताम्' इति पिण्डोपरि प्रत्यवनेजनं दद्यात् । ततो नीवीं विस्रंस्य सव्यं कृत्वाऽऽचम्य हरिं स्मृत्वापसव्यं कृत्वा वामेन पाणिना घृतं सूत्रं दक्षिणहस्तेन गृहीत्वा—'ॐ नमस्ते पिता०' इति मन्त्रेण 'एतच्चे पितर्वासः' इति पिण्डोपरि धृत्वा मोटकादिकमादाय—'ॐ अद्यामुकगोत्र पितरमुकप्रेत आद्यश्राद्धपिण्डे एतद्वासस्ते

मया दीयते तत्रोपतिष्ठताम्' इत्युत्सृजेत् । ततस्तूष्णीं पिण्डे गन्ध-पुष्पधूपदीपताम्बूलानि दद्यात् । ततः पिण्डशेषान्नं पिण्डसमीपे विकिरेत् । तत आचान्तस्य ब्राह्मणस्य करे—

ॐ अपां मध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितम् ।
ब्राह्मणस्य करे न्यस्ताः शिवा आपो भवन्तु मे ॥

इति जलं दद्यात् 'ॐ भवन्तु ते' ब्राह्मणस्यैतत्प्रतिवचनम् ।

ॐ लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पुष्करे ।
लक्ष्मीर्वसति गोष्ठेषु सौमनस्यं सदाऽस्तु मे ॥

इति पुष्पाणि दद्यात् । 'ॐ अस्तु सदा तव' इति प्रतिवचनम् ।

ॐ अक्षतं चास्तु मे पुण्यं शान्तिः पुष्टिर्धृतिश्च मे ।
यद्यच्छ्रेयस्करं लोके तत्तदस्तु सदा मम ॥

इति तण्डुलान्दद्यात् । 'ॐ अस्तु सदा तव' इति प्रतिवचनम् । अथवा—'ॐ शिवा आपः सन्तु' इति जलम् , 'ॐ सौमनस्यमस्तु' इति पुष्पम् , 'ॐ अक्षतं चारिष्टमस्तु' इति तण्डुलान्दद्यात् । 'ॐ सन्तु' इति 'ॐ अस्तु' इति वा प्रतिवचनम् । तत्र पुटकादिपात्रे शान्त्युदकं परिकल्प्य मेदिनीं शिरसाऽभिवन्द्य इमं मन्त्रं पठेत्(१)—

'ॐ नमो नमो मेदिनि लोकधात्रि,
उर्व्यै नमः शैलवराग्र्यधारिणि ।
धरणि काश्यपि जगत्प्रतिभूते,
वसुधे नमोऽस्तु भुवनैकविधात्रि ।

---

(१) 'नमो नमो मेदिनि लोकधातृ उर्वी मही शैल गिरिधारिणि नमः । धरणि काश्यपि जगत्प्रतिष्ठे वसुधे नमोऽस्तु वैष्णवि लोकधातृ । नमोऽस्तु ते सर्वरसप्रतिष्ठे निवापनाचीचिनमोऽस्तु ते ॥' क० ख० ग० ।

नमोऽस्तु ते सर्वरसप्रतिष्ठे ।

निवापनावीति नमोऽस्तु तेऽधरे ॥ २ ॥

ततो मोटकादिकमादाय—'ॐअद्यामुकगोत्रस्य पितुरमुकप्रेतस्य आद्यश्राद्धे दत्तैतदन्नपानादिकमुपतिष्ठताम्'इति विप्रकरे अक्षय्योदकं दद्यात् । 'ॐ उपतिष्ठताम्'इति प्रतिवचनम् । ततः सव्यं कृत्वा प्राङ्मुखः कृताञ्जलिस्तन्मनाः सुमनाः दक्षिणां दिशं पश्यन् 'ॐ अघोरः पितास्तु'इति पठेत् । तत्र पूर्वाभिमुखीं पिण्डोपरि जलधारां ददातीत्याचारः । 'ॐ अस्तु'इति प्रतिवचनम् । ततः पूर्वाभिमुखः—'ॐ गोत्रं नो वर्धताम्'इति वदेत् । 'ॐ वर्द्धताम्' इति प्रतिवचनम् ।

ॐ दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च ।

श्रद्धा च नो मा व्यगमद्बहुदेयं च नोऽस्तु ॥

अन्नं च नो बहु भवेदातिथींश्च लभेमहि ।

याचितारश्च नः सन्तु मा च याचिष्म कश्चन ॥

'एताः सत्या आशिषः सन्तु' इति आशिषो ब्राह्मणं याचेत् । 'ॐ सन्तु' इति ( ब्राह्मण ) प्रतिवचनम् । ततोऽपसव्यं कृत्वा सपवित्रकुशत्रयं पिण्डोपरि दक्षिणाग्रं धृत्वा 'ॐ नमो वाचयिष्ये' इति पृच्छेत् । 'ॐ वाच्यताम्' इत्यनुज्ञातः 'ॐ पित्रे नमः उच्यताम्' इति वदेत् । 'ॐ अस्तु नमः' इति प्रतिवचनम् । ततः पुटकादिस्थितं जलं गृहीत्वा—

'ॐ ऊर्ज्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् ।

स्वधास्थतर्प्पयत मे पितरम् ॥

इति दक्षिणाग्रां जलधारां सपवित्रकुशोपरि दद्यात् । ततो

नम्रीभूय पिण्डमाघ्रायोत्थापयेत्। पिण्डाधारकुशानुल्मुकं च वह्नौ क्षिपेत्। ततोऽर्घपात्रमुत्तानीकृत्य मोटकतिलजलान्यादाय दक्षिणाद्रव्यं चादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य कृतैतदाद्यश्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे' इति दक्षिणादानम्। 'ॐ स्वस्ति' इति प्रतिवचनम्। श्राद्धकर्ता पात्रब्राह्मणस्य चरणौ संवाह्य तं नमस्कुर्यात्। ततो दक्षिणपाणिना पात्रब्राह्मणदक्षिणपाणिं गृहीत्वा शय्यासनमञ्जनं कङ्कतिकां चार्पयेत्। ब्राह्मणश्चाञ्जनं कङ्कतिकां चादाय शय्यामाक्रम्य मुहूर्तं विश्रामेत्। ततः सामवेदाध्यायिब्राह्मणास्ताम्रपात्रस्थं तिलोदकमुपाहरेयुः। ततः श्राद्धकर्ता तेन जलेन गृहस्थितं द्रव्यमभिषिञ्चेत्। ततः सव्यं विधाय 'ॐ अग्निमुखा देवास्तृप्यन्ताम्' इति यवयुतजलेन कुशैः कुशोपरि तर्पयेत्। अवशिष्टमन्नम्—'ॐ भूतेभ्य एष बलिर्नमः' इति जलपुष्पाभ्यां बलिं दद्यात्। ततः सामगब्राह्मणान्भोजनादिभिः सन्तोषयेत्। ततोऽपसव्येन 'ॐ निरोङ्कारं स्वस्ति ब्रूहि' इति ब्राह्मणाय वदेत्। 'स्वस्ति' इति ब्राह्मणो ब्रूयात्। 'स्वस्त्यस्तु' इत्युक्त्वा ब्राह्मणमुत्थाप्य जलपात्रं गृहीत्वा निमन्त्रणस्थानस्थितं ब्राह्मणम्—

ॐ आमाव्वाजस्य प्रसवोजगम्यादेमे द्यावापृथिवी विश्वरूपे।
आमा गन्तामिपतरामातराचामासोमोऽअमृतत्वेन गम्यात्॥

इति पठन् प्रदक्षिणीकुर्वन् वारिधारया त्रिर्वेष्टयित्वा प्रणम्याष्टौ पदान्यनुव्रज्य प्रदक्षिणीकृत्याभिवादयेत्। सव्यं कृत्वाऽभिवादयेत्। 'ॐ देवताभ्य०' इति त्रिर्जपित्वा गृहं प्रविशेत्।

ततः पाणिभ्यामपसव्येन श्राद्धीयदीपनिर्वापणम् । सव्यं कृत्वा हस्तौ पादौ प्रक्षाल्याचम्य ततः श्राद्धसम्पूर्णकामः—

ॐ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥

इति पठित्वा विष्णुस्मरणं कुर्यात् । ततोऽशौचान्तद्वितीयदिन एव यथाशक्ति महार्हाणि रत्नानि, गाः, वाहनं, यानानि, दासीं, दासं, महान्ति वेश्मानि, श्रेष्ठभूषणानि प्रेतहितमुद्दिश्य ब्राह्मणाय दद्यात् । तद्यथा—'ॐ अद्याशौचान्तद्वितीयेऽह्नि अमुकगोत्रस्य पितुरमुकप्रेतस्य स्वर्गप्राप्तिकाम इमां गां रुद्रदैवतां यथानामगोत्राय ब्राह्मणाय दातुमहमुत्सृजे' इति गां दद्यात् । 'ॐ अद्य कृतैतद्गोदानप्रतिष्ठासिद्ध्यर्थं हिरण्यमाग्निदैवत्यं यथानामगोत्राय ब्राह्मणाय दक्षिणां तुभ्यमहं सम्प्रददे' इति यथाशक्ति दक्षिणां दद्यात् । एवं भूमिहिरण्यादिदानमपि । अस्मिन्दिने दशप्रभृति श्रोत्रियान्भोजयेत् । तान्परितोषयेच्च । अत्र दिने विहितमपि पञ्चगव्यपानं शिष्टा नाचरन्ति इति न लिखितम् ।

अथान्नोदककुम्भदानम्—तत एकादशाहश्राद्धं कृत्वाऽऽचम्य प्राङ्मुख उपविश्य कुशतिलजलान्यादाय—ॐ पितृगताहरहरन्नोदकुम्भोपस्थितिस्वगताश्वमेधयज्ञजन्यफलसमफलप्राप्तिकामोऽद्यादिपितृमरणदिनावधिकाशौचावच्छिन्नदिनोनवत्सरं यावत्प्रत्यहं पित्रे सान्नोदकुम्भदानमहं करिष्ये' इति जलपूर्णकुम्भमुपनीय सङ्कल्पं कुर्यात् । ततो (ऽपसव्यादि कृत्वा) मोटकादीन्यादाय—'ॐ अद्यामुकगोत्र पितरमुकप्रेत इदमासनं ते मया दीयते तवोपातिष्ठताम्' इत्यासनमुत्सृज्य सघृतव्यञ्जनमन्न-

मुपनीय—'ॐ अद्यामुकगोत्र पितरमुकप्रेतायं सान्नोदकुम्भस्ते मया दीयते तवोपतिष्ठताम्' इत्युत्सृजेत् । तदुभयं पात्रब्राह्मणाय प्रतिपादयेत् । अशौचोपनिपातेऽप्ययं दातव्य इति सपिण्डने कृते वर्षाभ्यन्तरे । 'ॐ अद्यामुकगोत्र पितरमुकशर्मन्निदमासनं तुभ्यं स्वधा' 'ॐ अद्यामुकगोत्र पितरमुकशर्मन्नयं सान्नोदकुम्भस्तुभ्यं स्वधा' इति वाक्यं कुर्यात् । ततो मोदकादीन्यादाय—'ॐ अद्य कृतैतत्सान्नोदकुम्भदानप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे' इति प्रत्यहं सान्नमुदकुम्भं दत्त्वा दक्षिणां दद्यात् । अत्र द्वादशाहश्राद्धं कार्यमिति केचित् । तदपि एकादशाहवत् ।

अथ मासिकश्राद्धप्रयोगः—तत्र श्राद्धपूर्वदिने एकभुक्तादिकं विधाय प्रातः श्वेतवस्त्रयुग्मेन स्नात्वा मध्यदिने पुनः स्नात्वा कृतनित्यक्रिय आचान्त उपविष्टः पूर्वोपकल्पितं प्रज्वालितप्रदीपं स्थापितगौरसर्षपतिलादिरक्षोघ्नं श्राद्धदेशमागत्य 'ॐ सिद्धम्' इति पृष्ट्वा कुशत्रयजलेन—

ॐ अपवित्रः पवित्रो वा सर्वावस्थां(१) गतोऽपि वा ।
यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥

'ॐ पुण्डरीकाक्षः पुनातु' इत्युच्चार्य श्राद्धे देयद्रव्याण्यात्मानं च सिञ्चेत् । 'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य प्रेतत्वविमुक्तिहेतुकषोडशश्राद्धान्तर्गतप्रथममासिकश्राद्धमहं करिष्ये' इति सङ्कल्पं कुर्यात् । एकादशमासाभ्यन्तरेऽधिकमासपाते षोड-

---

(१) विष्णोरभक्तितावस्था सर्वावस्थेति गीयते ।
इति वा० रामायणे अ० का० व्याख्याने नागेशः ।

शपदस्थाने सप्तदशपदं प्रयोज्यम् । ततस्त्रिर्गायत्रीं जपित्वा—

ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।
नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ॥

इति त्रिर्जपेत् । ततोऽपसव्यादि कृत्वा मोटकादीन्यादाय—'ॐ अद्यामुकगोत्र पितरमुकप्रेत प्रथममासिकश्राद्धे इदमासनं ते मया दीयते तवोपतिष्ठताम्' इत्यासनमुत्सृजेत् । 'ॐ अपहताऽअसुरा रक्षाᳬसि वेदिषदः' इति वामावर्तेन श्राद्धदेशे तिलान्विकिरेत् । तत 'ॐ आयन्तु नः पितरः' इति मन्त्रं पठित्वा पुटकादौ पवित्रं दक्षिणाग्रं धृत्वा 'ॐ शन्नो देवीः०' इति मन्त्रेण तत्र जलं क्षिपेत्—

'ॐ तिलोऽसि०' इति मन्त्रेण तिलान्प्रक्षिप्य तूष्णीं गन्धपुष्पं च निक्षिपेत् । ततस्तदर्घपात्रं वामहस्ते कृत्वा पवित्रमन्यपात्रोपरि उत्तराग्रं धृत्वा तदुपरि किंचिदुदकान्तरं दत्वा—

ॐ या दिव्याऽआपः पयसा सम्बभूवुर्याऽअन्तरिक्षाऽउत पार्थिवीर्याः ।

हिरण्यवर्णा यज्ञियास्ता नऽआपः शिवाः शᳬ स्योनाः सुहवा भवन्तु ॥

इति पठित्वा दक्षिणहस्तेन मोटकादीन्यादाय—'ॐ अद्यामुकगोत्र पितरमुकप्रेत प्रथममासिकश्राद्धे एष हस्तार्घस्ते मया दीयते तवोपतिष्ठताम्' इति पवित्रोपरि जलं दद्यात् । ततः पवित्रादिसहितमर्घपात्रमासनवामपार्श्वे 'ॐ पित्रे स्थानमसि' इति न्युब्जं कुर्यात् । पुनर्मोटकादीन्यादाय—'ॐ अद्यामुकगोत्र पितरमुकप्रेत प्रथममासिकश्राद्धे एतानि गन्धपुष्पधूपदीपताम्बूल-

यज्ञोपवीतवासांसि ते मया दीयन्ते तवोपतिष्ठन्ताम्' इति गन्धादिकमुत्सृजेत्। तत आसनस्य (भोजन) पात्रसहितस्य चतुर्दिशं चतुरस्रं मण्डलं कृत्वा श्राद्धीयान्नाग्रभागं घृतव्यञ्जनतिलजलयुतं पुटकादौ कृत्वा 'ॐ इदमन्नमेतद्भूस्वामिपितृभ्यो नमः' इत्युत्सृजेत्। ततस्ताम्रपात्रादिस्थितमन्नं हस्ताभ्यामादाय मनाक् स्थित्वा पितरं ध्यायन् भोजनपात्रे उपनयेत्। पुरुषतृप्तिक्षममन्नं परिविष्य भूयिष्ठपात्रान्तरेषु व्यञ्जनान्युपकल्प्य पुटकास्थितं घृतं सतिलजलं चोपनीय अन्नोपरि हस्तद्वयगृहीतपात्रेण मधु दद्यात्। ततः 'ॐ मधुव्वाता' इत्यादि त्र्यृचः 'ॐ मधु मधु मधु' इति च जपेत्। ततो व्यस्तहस्ताभ्यामन्नपात्रमालभ्य—'ॐ पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽमृते अमृतं जुहोमि स्वाहा'

ॐ इदं विष्णुर्वि चक्रमे त्रेधा निदधे पदम्।
समूढमस्य पा२ सुरे॥

'ॐ कृष्ण कव्यमिदं रक्ष मदीयम्' इति पठित्वा वामेन पाणिना अन्नपात्रमस्पृशन्दक्षिणहस्ताङ्गुष्ठमन्नजलघृतादिषु 'ॐ इदमन्नम्' 'ॐ इमा आपः' 'ॐ इदमाज्यम्' 'ॐ इदं हविः' इति निक्षिप्य 'ॐ अपहताऽअसुरा रक्षा२ंसि व्वेदिषदः' इत्यन्नोपरि तिलान्विकीर्य दक्षिणहस्ते मोटकादीन्यादाय—'ॐ अद्यामुकगोत्र पितरमुकप्रेत प्रथममासिकश्राद्धे इदमन्नं सोपकरणं ते मया दीयते तवोपतिष्ठताम् इत्युत्सृजेत्। ततो गायत्रीं, 'मधुव्वाता' इत्यादि ऋचः, 'मधु मधु मधु' इति च जपेत्। 'अन्नहीनम्' इति मन्त्रं पठेत्। ततः कुशेषूपविश्य पुनर्गायत्रीं, मधु-

च्वाता' इत्यादिऋचः, 'मधु मधु मधु' इति च जपेत्। रक्षोघ्नमन्त्रान् 'कृणुष्वपाज' इत्यादिकान् जपेत्। भूमौ तिलान् क्षिप्त्वा पितृमन्त्रपुरुषसूक्ताप्रतिरथादीनि पवित्राणि यथाशक्ति जपेत्। 'ॐ नमस्तुभ्यं विरूपाक्ष०' इति श्लोकमपि पठेत्। उच्छिष्टसन्निधावास्तृतकुशत्रयां भूमिं प्रोक्ष्य व्यञ्जनघृततिलयुतमन्नं वारिणाप्लाव्य—

ॐ अनग्निदग्धा ये जीवा ये प्रदग्धाः कुले मम।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम्॥

इति तदन्नं कुशोपरि विकिरेत्। ततः सव्यं कृत्वाऽऽचम्य हरिं स्मृत्वाऽपसव्यं कृत्वा पिण्डस्थानं निर्माय तन्मध्ये वामहस्तोपात्तदक्षिणकरेण गृहीतदर्भपिञ्जुलीमूलेन प्रादेशपात्रं 'ॐ अपहता' इत्यादिनोल्लिख्य दर्भपिञ्जुलीमुत्तरतस्त्यजेत्। ततो रेखोपरि 'ॐ ये रूपाणि' इत्यादिनाङ्गारं भ्रामयित्वाङ्गारं दक्षिणतस्त्यजेत्। ततो रेखोपरि उपमूलसकृल्लूनकुशत्रयं दक्षिणाग्रमास्तीर्य सव्येन 'ॐ देवताभ्य०' इति त्रिर्जपेत्। ततोऽपसव्यं कृत्वा पुटके तिलजलगन्धपुष्पाणि कृत्वा मोटकादीन्यादाय—'ॐ अद्यामुकगोत्र पितरमुकप्रेत प्रथममासिकश्राद्धपिण्डस्थानेऽत्रावनेनिक्ष्व ते मया दीयते तवोपतिष्ठताम्' इत्यवनेजनं कुशोपरि दद्यात्। ततस्तिलघृतमधुयुतेनान्नेन पिण्डं कृत्वा घृतमधुभ्यामभिघार्य्य दक्षिणहस्तेन मोटकादीनि चादाय 'ॐ अद्यामुकगोत्र पितरमुकप्रेत प्रथममासिकश्राद्धे एष पिण्डस्ते मया दीयते तवोपतिष्ठताम्' इति वामान्वारब्धदक्षिणहस्तेनावनेजनस्थाने पिण्डं दद्यात्। ततो दर्भमूले करं प्रोञ्छ्य सव्यं

कृत्वाऽऽचम्य हरिं स्मृत्वा अपसव्यं कृत्वा दक्षिणाभिमुखः 'ॐ अत्र पितर्मादयस्व यथाभागमावृषायस्व' इति पठेत् । तत उत्तराभिमुखीभूय श्वासं नियम्य पितरं भास्वरमूर्तिं ध्यायन् ( मुखं पर्य्यावर्त्तयन् ) 'ॐ अमीमदत पिता यथा भागमावृषायिष्ट' इति पठेत् । ततोऽवनेजनपात्रं दत्तावशिष्टजलयुतं वामहस्ते कृत्वा दक्षिणहस्ते मोटकादीन्यादाय—'ॐ अद्यामुकगोत्र पितरमुकप्रेत प्रथममासिकश्राद्धे पिण्डेऽत्र प्रत्यवनेनिक्ष्व ते मया दीयते तवोपतिष्ठताम्' इति प्रत्यवनेजनं पिण्डोपरि दद्यात् । ततो नीवीं विस्रंस्य सव्यं कृत्वाऽऽचम्यापसव्यं कृत्वा वामेन पाणिना धृतं सूत्रं दक्षिणेनादाय उभाभ्यां पिण्डोपरि 'एतत्ते पितर्वासः' इति सूत्रं धृत्वा मोटकादीन्यादाय—'ॐ अद्यामुकगोत्र पितरमुकप्रेत प्रथममासिकश्राद्धपिण्डे एतत्ते वासस्ते मया दीयते तवोपतिष्ठताम्' इति सूत्रं समुत्सृजेत् । ततस्तूष्णीं गन्धपुष्पादिकं दद्यात् । ततः पिण्डशेषान्नं पिण्डसमीपे विकिरेत् । 'ॐ शिवा आपः सन्तु' इति जलम् । 'ॐ सौमनस्यमस्तु' इति पुष्पं 'ॐ अक्षतं चारिष्टं मस्तु, इति तण्डुलान् अन्नपात्रोपरि क्षिपेत् । मोटकादीन्यादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य प्रथममासिकश्राद्धे दत्तैतदन्नपानादिकमुपतिष्ठताम्' इत्यक्षय्योदकं दद्यात् । ततः सव्यं कृत्वा 'ॐ अघोरः पितास्तु' इति दाक्षिणां दिशं पश्यन् पिण्डोपरि पूर्वाग्रां जलधारां दद्यात् । ततः पूर्वाभिमुखीभूय—'ॐ गोत्रं नो वर्द्धतां दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च' इत्यादिनाऽऽशीः प्रार्थनं कुर्य्यात् । ततोऽपसव्येन पिण्डोपरि सपवित्रान्

कुशान्धृत्वा पुटकादिस्थजलेन—

ॐ ऊर्ज्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम्।
स्वधास्थ तर्पयत मे पितरम्॥

इति कुशोपरि दक्षिणाग्रां जलधारां दद्यात्। ततः पिण्डमाघ्रायोत्थापयेत्। पिण्डाधारकुशानुल्मुकं च वह्नौ क्षिपेत्। अर्घपात्रमुत्थाप्य मोटकादीन्यादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य कृतैतत्प्रथममासिकश्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे' इति दक्षिणां दद्यात्। ततः सव्यं कृत्वा 'ॐ देवताभ्य०' इति त्रिर्जपेत्। ततोऽपसव्यं कृत्वा पाणिना दीपं निर्वाप्य हस्तौ पादौ प्रक्षाल्य सव्यमाचमनं च कुर्यात्। 'ॐ प्रमादात्०' इति पठित्वा विष्णुं स्मरेत्। श्राद्धीयवस्तूनि ब्राह्मणाय प्रतिपादयेत् जले वा क्षिपेत्। प्रायेणाऽपात्रकमेव मासिकश्राद्धं कुर्वन्तीत्यत्रापात्रकप्रयोगो लिखितः। त्रिपक्षश्राद्धमपि कर्तव्यम्। तच्च मासिकवत्। एवमेव द्वितीयमासिकतृतीयमासिकचतुर्थमासिकपञ्चममासिकोनषाण्मासिकषाण्मासिकसप्तममासिकाष्टममासिकनवममासिकदशममासिकैकादशमासिकोनवार्षिकद्वादशमासिकश्राद्धेषु तत्तत्पदप्रक्षेपेण प्रयोग ऊह्यः। अधिकमासपाते एकादशमासिकानन्तरं द्वादशमासिकं तत ऊनवार्षिकं ततस्त्रयोदशमासिकं श्राद्धमिति क्रमः। सपात्रकमासिकश्राद्धकरणे ब्राह्मणनिमन्त्रणस्वागतप्रश्नपादार्घदानाऽऽचमनीयदानब्राह्मणोपवेशन(प्रश्न)प्रतिवचननमोवाचनब्राह्मणविसर्जनानि विशेष आद्यश्राद्धप्रयोगवदूह्य इति।

अथ सपिण्डनश्राद्धप्रयोगः—तत्र चाधुनिकाः प्रेतश्राद्धातिरिक्तश्राद्धचतुष्टयं सपात्रकमेव कुर्वन्तीति तथैव लिख्यते। तत्र पूर्वदिने निरामिषमेकवारं भुक्त्वा रात्रौ सर्वभुक्तजनगृहे विप्रनिवेशनं गत्वा दक्षिणाप्लवगोमयोपलिप्तायां भूमावाचान्त उपविश्य ब्राह्मणमुदङ्मुखं उपवेश्य कृतापसव्यः पुष्पचन्दनताम्बूलानि ब्राह्मणकरे दत्त्वा दक्षिणकरेण ब्राह्मणदक्षिणजानुं स्पृष्ट्वा—'ॐ अस्यां रात्रावमुकगोत्रस्य पितुरमुकप्रेतस्य श्वः सपिण्डीकरणश्राद्धकरणाय भवन्तं ब्राह्मणमहमामन्त्रये' इत्यामन्त्रणं कुर्यात्। 'ॐ आमन्त्रितोऽस्मि' इति प्रतिवचनम्। ततः 'ॐ अक्रोधनेन' इत्यादि,

ॐ सर्वायासविनिर्मुक्तेन कामक्रोधविवर्जितेन।
भवितव्यं भवता नः श्वस्तने श्राद्धकर्मणि॥

इति ब्राह्मणं नियमान् श्रावयेत्। 'यद्यविघ्नेन रजनी यास्यति तदा सर्वमेतत्करिष्यामि' इति तत्प्रतिवचनम्। ततोऽग्रिमदिने प्रातः श्वेतवस्त्रयुग्मेन स्नात्वा मध्यान्दिने पुनः स्नात्वा कृतनित्यक्रियः श्राद्धकर्ता श्राद्धेतरवेलायां गोमयोपलिप्ताच्छतपाकस्थाने तिलान्विकीर्य परितश्छागान्बन्धयित्वा सपिण्डद्वारा नूतनभाण्डैः स्वयं वा पाकमारभेत्। श्राद्धभूमिं पञ्चगव्येनोपलिप्य स्वल्पदङ्गारैः संशोध्य गौरमृत्तिकयाऽऽच्छाद्य तिलैः सर्षपैश्च विकिरेत्। द्विजं कारितश्मश्रुनखच्छेदनमाभ्यगम्य दन्तधावनं ताम्रपात्रे तैलोद्वर्तनादीन्युपनीय स्नानार्थं दत्तजलेन स्नातं यजमानसवर्णेनाहूतमाचान्तं तं मध्याह्ने शुचिराचान्तः शुक्लद्विवासा उपविश्य गोमयोपलिप्तायां भूमौ वामावर्तेन कृतगोमूत्र-

ण्डलायां 'ॐ भूम्यै नमः' इत्यक्षतपुष्पैस्त्रिरर्चयित्वा भूमौ कुशात्रयमास्तीर्य तदुपरि तिष्ठन् 'ॐ स्वागतम्' इति ब्राह्मणं पृच्छेत्। 'ॐ सुस्वागतम्' इति तेनोक्ते 'ॐ इदं ते पाद्यम्' इत्युपनीय विनीतः सन् पुनः पुनरभिनन्द्य पात्रब्राह्मणपादौ प्रक्षाळयेत्। ततः पुटकेऽर्घं कृत्वा दक्षिणाभिमुखोऽपसव्यं कृत्वा मोटकादिकमादायार्घपात्रं वामहस्ते कृत्वा—'ॐ अद्यामुकगोत्र पितरमुकप्रेत सपिण्डीकरणश्राद्धे एष पादार्घस्ते मया दीयते तवोपतिष्ठताम्' इति पादार्घं दद्यात्। तत आचमनीयजलं पात्रस्थमुपनीय शिरसाऽभिवन्द्य जानुनिविश्राम्य 'ॐ इदं ते आचमनीयम्' इत्याचमनीयजलं ब्राह्मणाय दत्त्वा स्वयं पादौ प्रक्षाल्याचम्य तमाचम्याऽग्रे कृत्वा श्राद्धदेशमागच्छेत्। पूर्वरात्रौ निमन्त्रणासम्भवे तस्मिन्नेवाह्नि श्राद्धवेलायां पूर्वोक्तविशेषणविशिष्टं यजमानसवर्णेनाहूतं पूर्ववत्कृतगोमूत्रमण्डलायां भूमावुपवेशयेत्स्वयमप्युपविशेत्। ततः श्राद्धकर्ता 'ॐ इदं ते पाद्यम्' इत्युपनीय विनीतः पुनः पुनरभिनन्द्य पात्रब्राह्मणपादौ प्रक्षाळयेत्। ततोऽपसव्यं कृत्वा पुष्पचन्दनताम्बूलानि विप्रकरे दत्त्वा ब्राह्मणजानुं दक्षिणहस्तेन स्पृष्ट्वा—'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणश्राद्धकरणाय भवन्तं ब्राह्मणमहमामन्त्रये' इत्यामन्त्र्य 'ॐ आमन्त्रितोऽस्मि' इति तेनोक्ते 'ॐ अक्रोधनेन' इत्यादिना 'ॐ सर्वापापविनिर्मुक्तेन' इत्यादिना च ब्राह्मणं नियमान् श्रावयेत्। 'भवितव्यम्' इति तेनोक्ते अर्घं परिकल्प्य वामहस्ते कृत्वा मोटकादिकमादाय—'ॐ अद्यामुकगोत्र पितरमुकप्रेत सपिण्डीकरणश्राद्धे एष पादार्घस्ते मया

दीयते तवोपतिष्ठताम्' इति पादार्घं दद्यात्। तत आचमनीय-जलं पात्रस्थं शिरसाऽभिवन्द्य जानुनि विश्राव्य 'ॐ इदं ते आचमनीयम्' इति ब्राह्मणाय दत्त्वा सव्येन स्वयं पादौ प्रक्षाल्याचम्य तमाचम्याऽग्रे कृत्वा श्राद्धदेशमागच्छेत्। तत्र प्राङ्मुख उपविश्य 'सिद्धम्' इति पृष्ट्वा आसनं स्पृष्ट्वा 'अत्र निषीदस्व' इति ब्राह्मणमुदङ्मुखमुपवेशयेत्। द्विजपादयोस्तले कुशान्दद्यात्। आसनसमीपे तिलतैलेन दीपं स्थापयेत्। अन्यांश्च प्रत्यासन-समीपे चतुरो दीपान्स्थापयेत्। ब्राह्मणेन दीपरक्षा कर्तव्या। रक्षोघ्नान् गौरसर्षपांस्तिलांश्छ्राद्धदेशे सन्निधापयेत्। काककु-क्कुटादींश्छ्राद्धहन्तॄनपसारयेत्। ततः 'ॐ अपवित्रः पवित्रो वा' इत्यादि पठित्वा 'ॐ पुण्डरीकाक्षः पुनातु' इति श्राद्धीय-द्रव्याण्यात्मानं च कुशत्रयेण सिञ्चेत्। ततः कुशत्रयतिलजला-न्यादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य प्रेतत्वविमुक्ति-हेतुकषोडशश्राद्धान्तर्गतसपिण्डीकरणश्राद्धमहं करिष्ये' इति सङ्कल्पं कुर्यात्। 'ॐ कुरुष्व' इति ब्राह्मणो वदेत् (१)। 'ॐ गायत्रीजपमहं करिष्ये' इति ब्राह्मणं पृच्छेत्। 'ॐ कुरुष्व' इति तेनानुज्ञातः प्रणवव्याहृतिसहितां गायत्रीं त्रिर्जपेत्। ततो

---

(१) "अथ नीविमुद्वृह्य नमस्करोति पितृदेवत्या वै नीविः" (श० ब्रा० २-४-२-२०) इति ब्राह्मणमनुसृत्य श्राद्धपद्धतिषु 'नीवीं विस्रंस्य' इत्यभिधानादत्रैव—

ॐ सोमस्य नीविरसि विष्णोः शर्मासि शर्म यजमानस्येन्द्रस्य योनिरसि सुसस्याः कृषीस्कृधि॥

इत्यनेन अपसव्येन तिलमोटकं गृहीत्वा वामकट्यां नीविबन्धनम-वश्यं कर्तव्यमिति दिक्।

देवश्राद्धार्थोपकल्पितासनादिदेशमागत्योदङ्मुख उपविश्य कुशाग्रयवजलान्यादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकामुकगोत्रपितामहप्रपितामहवृद्धप्रपितामहामुकामुकशर्मश्राद्धसम्बन्धिनो विश्वेदेवा इदमासनं वो नमः' इति पूर्वाग्रकुशत्रयरूपं सजलयवप्रोक्षितमुत्सृजेत् । 'ॐ विश्वान्देवानहमावाहयिष्ये' इत्युक्त्वा—

ॐ विश्वेदेवास ऽआगत शृणुता म ऽइमꣳहवम् ।
एदं बर्हिर्निषीदत ॥

इत्यावाह्य 'ॐ यवोऽसि यवयास्मद्द्वेषो यवयारातीः' इति श्राद्धदेशे यवान्विकीर्य—

ॐविश्वेदेवाः शृणुतेमꣳ हवं मे ये ऽअन्तरिक्षे य ऽउप द्यविष्ठ ।
ये ऽअग्निजिह्वा ऽउत वा यजत्रा ऽआसद्यास्मिन्बर्हिषि मादयध्वम्॥

ॐ आगच्छन्तु महाभागा विश्वेदेवा महाबलाः ।
ये यत्र योजिताः श्राद्धे सावधाना भवन्तु ते ॥

इति पठेत् । ततः पुटके पूर्वाग्रं पवित्रं धृत्वा । 'ॐ शन्नो देवीरभिष्टय॰' इति मन्त्रेण जलं तत्र क्षिप्त्वा 'ॐ यवोऽसि॰' इति यवान् प्रक्षिप्य गन्धपुष्पे तूष्णीं तत्र प्रक्षिप्य अर्घपात्रं वामहस्ते कृत्वा पवित्रं भोजनपात्रे पूर्वाग्रं धृत्वा तदुपरि किञ्चिदुदकान्तरं दत्त्वा 'ॐ या दिव्या॰' इति पठित्वा कुशत्रययवजलान्यादाय-'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकामुकगोत्रपितामहप्रपितामहवृद्धप्रपितामहामुकामुकशर्मश्राद्धसम्बन्धिनो विश्वेदेवा एष वो हस्तार्घो नमः'(१)इति

(१) "असावेष ते अर्घ" इति कात्यायनोपदेशात् 'असौ'इत्य-

पवित्रोपरि अर्घजलमुत्सृजेत् । ततः पवित्रसहितमर्घपात्रमासन-दक्षिणपार्श्वे–'ॐ विश्वेभ्यो देवेभ्यः स्थानमसि' इति विश्वेदे-वार्घपात्रमुत्तानं स्थापयेत् । ततः कुशत्रययवजलान्यादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्त-कामुकगोत्रपितामहप्रपितामहवृद्धप्रपितामहामुकामुकशर्मश्राद्धस-म्बन्धिनो विश्वेदेवा एतानि गन्धपुष्पधूपदीपताम्बूलयज्ञोपवी-तवासांसि वो नमः' इति गन्धादीनुत्सृजेत् । ततो भोजनपात्रा-सनयोश्चतुर्दिशं जलेन चतुष्कोणं मण्डलं कृत्वा अपसव्येन मोदकादिकमादाय तिलघृतव्यञ्जनयुतमन्नम् 'ॐ इदमन्नमेतद्भू-स्वामिपितृभ्यो नमः' इति दक्षिणमुखमुत्सृजेत् । ततः सव्यं कृत्वा ताम्रपात्रादिकं गृहीत्वा तेनान्नमादाय मनाक् स्थित्वा देवान् ध्यायन्पात्रे परिवेषयेत् । व्यञ्जनानि घृतं जलं च तत्रो-पनीयान्नोपरि मधु दत्त्वा 'ॐ मधुव्वाता०' इति त्र्यृचं 'ॐ मधु मधु मधु' इति मन्त्रैरन्नमभिमन्त्रयेत् । ततः ऋजुहस्ताभ्यामन्न-पात्रमलाभ्य—

'ॐ पृथिवी त पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते ऽमृतं जुहोमि स्वाहा'

ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ।
समूढमस्यपाᳬसुरे ॥

इति च पठित्वा 'ॐकृष्णहव्यमिदं रक्ष मदीयम्' इति पठि-

---

स्य देवतानामादेशपरिचायकत्वात्तत्तद्देवतापदं सम्बुद्ध्यन्तमुल्लिख्य हस्ते अर्घप्रतिपादनं कातीयैः कर्तव्यम् । न तु 'नमः' पदं, 'स्वाहा' पदं वा अर्घ्यदाने प्रयोक्तव्यम् । सूत्रानुपदेशात् ।

त्वा 'ॐ इदमन्नम्' इत्यन्ने, 'ॐ इमा आपः' इति जले, 'ॐ इदमाज्यम्' इति घृते, 'ॐ इदं हविः' इति पुनरन्ने दक्षिणकराङ्गुष्ठमावेश्य 'ॐ यवोसि०' इत्यन्नोपरि यवान्निक्षिप्य कुशत्रययवजलान्यादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकामुकगोत्रपितामहप्रपितामहवृद्धप्रपितामहामुकामुकशर्मश्राद्धसम्बन्धिनो विश्वेदेवा एतद्वोऽन्नं सोपकरणं नमः' इत्यन्नमुत्सृजेत्। एवं देवकाण्डं निर्वर्त्य हस्तौ पादौ प्रक्षाल्य कुशवटुकादिकं पुनर्गृहीत्वा प्रेतश्राद्धदेशमागत्योपविश्यापसव्यादि कृत्वा दक्षिणाभिमुखो मोटकादीन्यादाय—'ॐ अद्यामुकगोत्र पितरमुकप्रेत सपिण्डीकरणश्राद्धे इदमासनं ते मया दीयते तवोपतिष्ठताम्' इति पित्रे आसनं मोटकरूपं तिलजलप्रोक्षितमुत्सृजेत्। पुनर्मोटकादिकमादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धेऽमुकगोत्र पितामहामुकशर्मन्निदमासनं ते स्वधा' इति स्थानत्रये क्लृप्तासनेषु सर्वपश्चिमस्थानस्थितमासनं पितामहायोत्सृजेत्। पुनर्मोटकादीन्यादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धेऽमुकगोत्र प्रपितामहामुकशर्मन्निदमासनं ते स्वधा' इति मध्यममासनं प्रपितामहायोत्सृजेत्। पुनर्मोटकादीन्यादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धेऽमुकगोत्र वृद्धप्रपितामहामुकशर्मन्निदमासनं ते स्वधा' इति सर्वपूर्वमासनं वृद्धप्रपितामहायोत्सृजेत्। ततः पितामहादीनुद्दिश्य 'ॐ पितॄनहमावाहयिष्ये' इत्युक्त्वा।

ॐ उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि।

उशन्तुशतऽआवह पितॄन्हविषेऽअत्तवे ॥

इति पितामहादीनावाह्य—'ॐ अपहता' इत्यादि उभयत्र-श्राद्धस्थाने तिलान्विकीर्य्य (१)'ॐ आयन्तु नः पितरः' इत्यादिमन्त्रं जपेत् । ततोऽर्घपात्रचतुष्टयेऽनखच्छिन्नं दाक्षिणाग्रं पवित्रं प्रत्येकं धृत्वा 'ॐ शन्नो देवीः०' इति प्रत्येकं जलं क्षिप्त्वा 'ॐ तिलोऽसि०' इति स्वाहान्तेन मन्त्रेण प्रत्येकं तेष्वेव तिला-न्प्रक्षिप्य गन्धपुष्पे तेष्वेव तूष्णीं प्रक्षिप्य प्रेतार्घपात्रं वामहस्ते कृत्वा पवित्रं पात्रब्राह्मणकरे उत्तराग्रं धृत्वा तदुपरि किञ्चि-ज्जलान्तरं दत्त्वा 'ॐ या दिव्या आप०' इति पठित्वा मोट-कादीन्यादाय—'ॐ अद्यामुकगोत्र पितरमुकप्रेत सपिण्डीकरण-श्राद्धे एष हस्तार्घस्ते मया दीयते तवोपतिष्ठताम्' इति पात्रब्रा-ह्मणहस्ते पवित्रोपरि अर्घजलं दददुत्सृजेत् । अवशिष्टजलसहि-तार्घपात्रं ब्राह्मणाग्रे निदध्यात् । पितामहार्घपात्रं वामहस्ते कृत्वा पवित्रं भोजनपात्रे धृत्वा तदुपरि जलान्तरं दत्त्वा 'ॐ या दिव्या' इत्यादि पठित्वा मोटकादीन्यादाय—'ॐ अ-द्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे-ऽमुकगोत्र पितामहामुकशर्म्मन्नेष ते हस्तार्घः स्वधा' इति पूर्व-वदर्घं दद्यात् । अवशिष्टजलयुतमर्घपात्रमग्रे धारयेत् । ततः प्रपितामहार्घपात्रं वामहस्ते कृत्वा पवित्रं भोजनपात्रे धृत्वा तदुपरि जलान्तरं दत्त्वा 'ॐ या दिव्या' इत्यादि पठित्वा मोटकादीन्यादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपि-

---

(१) आयन्तु नःपितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः ।
अस्मिन्यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान् ॥

ण्डीकरणनिमित्तकश्राद्धे अमुकगोत्र प्रपितामहामुकशर्मन्नेष ते हस्तार्घः स्वधा' इत्यर्घं दद्त्पूर्ववदुत्सृजेत्। तदर्घपात्रमवशिष्टजलयुतमग्रे स्थापयेत्। तृतीयार्घपात्रं वामहस्ते कृत्वा पवित्रं भोजनपात्रे धृत्वा तदुपरि जलान्तरं दत्त्वा 'ॐ या दिव्या०' इति पठित्वा मोटकादीन्यादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे अमुकगोत्र वृद्धप्रपितामहामुकशर्मन्नेष ते हस्तार्घः स्वधा' इति पूर्ववदर्घमुत्सृजेत्। अवशिष्टजलयुतार्घपात्रमग्रे स्थापयेत्। ततः सव्यं कृत्वाचम्यापसव्यं कृत्वा पुटकत्रयमग्रे धृत्वा प्रेतार्घपात्रं गृहीत्वा—

ॐ ये समानाः समनसः पितरो यमराज्ये।
तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पताम्॥
ये समानाः समनसो जीवा जीवेषु मामकाः॥
तेषाᳫंश्रीर्मयिकल्पतामस्मिँल्लोके शतᳫंसमाः॥

इति मन्त्राभ्यां प्रेतार्घपात्रस्थजलतृतीयभागं पुटकान्तरे धृत्वा पुनरपि मन्त्रद्वयं पठित्वाऽपरतृतीयभागं पुटकान्तरे धृत्वा प्रेतार्घपात्रस्थतृतीयभागजलं पुटकान्तरे धृत्वा तूष्णीं प्रथमपुटकस्थविभक्तजलतृतीयभागं प्रेतार्घपात्रे कृत्वा पवित्रपुष्पसहितं प्रेतार्घपात्रमादाय 'ॐ ये समानाः०' इति मन्त्रद्वयेन प्रेतार्घपात्रस्थतृतीयभागजलं पितामहार्घपात्रस्थजलेन मेलयेत्। एवमपरपुटकस्थितार्घतृतीयभागद्वयं क्रमेण प्रत्येकं प्रेतार्घपात्रे कृत्वा प्रत्येकं मन्त्रद्वयं पठित्वा प्रपितामहार्घपात्रस्थजलं वृद्धप्रपितामहार्घपात्रस्थजले क्रमेण मेलयेत्। ततः प्रेतार्घपात्रं (पात्र) ब्राह्मणवामपार्श्वे 'ॐ पित्रे स्थानमसि' इति न्युब्जं कृत्वा स्थापयेत्।

वृद्धप्रपितामहार्घपात्रस्थजलादिकं प्रपितामहार्घपात्रे कृत्वा तत्सर्वं पितामहार्घ्यपात्रे कृत्वा पितामहार्घपात्रमुत्तानं प्रपितामहार्घपात्रोपरिधृत्वा तद्वद्द्वयमुत्तानं वृद्धप्रपितामहार्घपात्रोपरि धृत्वा पात्रत्रयमेकदैव पितामहासनवामपार्श्वे 'ॐ पितृभ्यः स्थानमसि' इति न्युब्जं कृत्वा स्थापयेत् । एवं स्थापितमर्घपात्रचतुष्टयं दक्षिणादानपर्यन्तं न चालयेत् । ततो मोटकादिकमादाय—'ॐ अद्यामुकगोत्र पितरमुकप्रेत सपिण्डीकरणश्राद्धे एतानि गन्धपुष्पधूपदीपताम्बूलयज्ञोपवीतवासांसि ते मया दीयन्ते तवोपतिष्ठन्ताम्' इति पित्रे गन्धादीनि दद्यात् । पुनर्मोटकादीन्यादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे अमुकगोत्र पितामहामुकशर्मन्नेतानि गन्धपुष्पधूपदीपताम्बूलयज्ञोपवीतवासांसि ते स्वधा' इति पितामहाय गन्धादीन्युत्सृजेत् । एवं प्रपितामहाय, वृद्धप्रपितामहाय च गन्धादीन्युत्सृजेद्यथाक्रमेण । ततः पितृब्राह्मणहस्ते स्वहस्तेन 'ॐ एष गन्धः' इति चन्दनं निवेदयेत् । 'ॐ सुगन्धः' इति तेनोक्ते 'ॐ एतानि पुष्पाणि' इति निवेदयेत् । 'ॐ सुपुष्पाणि' इति तेनोक्ते 'ॐ एष धूपः' इति निवेदयत् । 'ॐ सुधूपः' इति तेनोक्ते 'ॐ एष दीपः' इति दीपं निवेदयेत् । 'ॐ सुदीपः' इति तेनोक्ते इति यथाक्रमेण ताम्बूलयज्ञोपवीतवासांसि निवेदयेत् । ब्राह्मणाय प्रतिपादयेत् । पुष्पाणि शिखातिरिक्तदेशे न धारयेत् । ततः पात्रब्राह्मणचतुर्दिशं (१) वृत्तुष्कोणं मण्डलं जलेन कुर्यात् ।

(१) "दैवे चतुरस्रं, पित्र्ये वृत्तं मण्डलं कृत्वा क्रमेण सयवान् सतिलांश्च दर्भान्दद्यात्" इति निर्णयसिन्धौ बह्वृचपरिशिष्टोक्तेः ।

अपरं पितामहादित्रिके चतुष्कोणं मण्डलं कुर्यात्। ततः सव्यं कृत्वा प्राङ्मुख उपविश्य पातितदक्षिणजानुस्ताम्रपात्रादौ व्यञ्जनक्षारवर्जितं सघृतमन्नं कृत्वा पुटकादिस्थजले हस्तेन 'ॐ अग्नये कव्यवाहनाय स्वाहा' 'ॐ सोमाय पितृमते स्वाहा' इत्याहुतिद्वयं तदन्नं च जुहुयात्। तत अपसव्यं कृत्वाऽवशिष्टमन्नं(१) पितामहादिपात्रे किंचित्किंचिन्निदध्यात्। पिण्डार्थं चावशेषयेत्। ततो हस्ताभ्यां ताम्रपात्रमादाय तेनान्नं गृहीत्वा प्रेतपात्रे पितरं ध्यायन् परिवेषयेत्। पृथक्पुटकादिस्थितानि घृतजलव्यञ्जनानि चोपनयेत्। ततस्तेनैव च क्रमेण पितामहादिपात्रत्रये प्रत्येकमन्नादिपरिवेषणं कुर्यात्। ततः प्रेतपात्रादिस्थितान्नेषु प्रत्येकं मधु दद्यात्। ततः प्रत्येकमन्नमभिमन्त्रयेत्।

ॐ मधुव्वाता ऽऋतायते मधुक्षरन्ति सिन्धवः।
माध्वीर्नः सन्त्वोषधीः॥
मधुनक्तमुतोषसो मधुमत्पार्थिवꣳरजः।
मधु द्यौरस्तु नः पिता॥
मधुमान्नो व्वनस्पतिर्म्मधुमाꣳअस्तु सूर्य्यः।
माध्वीर्गावो भवन्तु नः॥

'ॐ मधु मधु मधु' इति मन्त्रैः। ततः प्रेतान्नपात्रं व्यस्ता-

---

मण्डलानि च कार्याणि नैवारैश्चूर्णकैः शुभैः।
गौरमृत्तिकया वापि भस्मना गोमयेन वा॥

इति ब्राह्मोक्तेश्च दैवे चतुष्कोणं पित्र्ये वर्तुलं भस्मना मण्डलं कार्यम्।

(१) अग्नौकरणशेषं तु पित्र्ये तु प्रतिपादयेत्।
प्रतिपाद्य पितॄणां तु न दद्याद्वैश्वदेविके॥ इति यमः।

भ्यां न्युब्जाभ्यां हस्ताभ्यामालभ्य—

ॐ पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽअमृते ऽअमृतं जुहोमि स्वाहा ॥

ॐ इदं विष्णुर्व्विचक्रमे त्रेधा निदधे पदम् ।

समूढमस्य पाꣳसुरे ॥

इति जपित्वा 'ॐ कृष्णकव्यमिदं रक्ष मदीयम्' इत्युक्त्वा पात्रब्राह्मणस्य दक्षिणहस्ताङ्गुष्ठं गृहीत्वा 'ॐ इदमन्नम्', 'ॐ इमा आपः', 'ॐ इदमाज्यम्', 'ॐ इदं हविः' इति क्रमेणान्नजलघृतान्नेषु तं निवेश्य 'ॐ अपहता०' इत्यन्नोपरि प्रचुरतिलान्प्रक्षिप्य मोदकादीन्यादाय-'ॐ अद्यामुकगोत्र पितरमुकप्रेत सपिण्डीकरणनिमित्तकश्राद्धे इदमन्नं सोपकरणं ते मया दीयते तवोपतिष्ठताम्' इति पित्रेऽन्नमुत्सृजेत् । अनेनैव क्रमेण पितामहान्नपात्रमालभ्य 'ॐ पृथिवी ते पात्रम्' इत्यादि जपित्वा 'ॐ इदमन्नम्' इत्यादिना स्वदक्षिणहस्ताङ्गुष्ठनिवेशनं कृत्वा 'ॐ अपहता' इत्यादिना तिलानन्ने विकीर्य्य मोदकादीन्यादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धेऽमुकगोत्र पितामहामुकशर्म्मन्नेतत्तेऽन्नं सोपकरणं स्वधा'इति पितामहायान्नमुत्सृजेत् । ततः प्रपितामहवृद्धप्रपितामहान्नपात्रमालभ्य पूर्ववत् 'ॐ पृथिवी ते पात्रम्' इत्यादिकं सर्वं कृत्वा मोदकादीन्यादाय सङ्कल्पं कृत्वा क्रमेण प्रपितामहाय, वृद्धप्रपितामहाय चान्नमुत्सृजेत् । ततः 'ॐ भवान् प्राशयतु' इति पात्रब्राह्मणाय जलचुलुकं दत्त्वा सप्रणवव्याहृतिकां गायत्रीम्, 'ॐ मधुव्वाता'इत्याद्यृचम्, 'ॐ मधु मधु मधु' इति जपित्वा 'ॐ

अच्छहीनम्' इत्यादि च पठित्वा 'ॐ यथासुखं जुषस्व' इति पात्रब्राह्मणं प्रति ब्रूयात्। स च 'ॐ कारपूर्वं वामेन पाणिना पात्रमत्यजन् चुलुकं गृहीत्वा भुञ्जीत। हास्य, क्रोध, स्वरादिकं न कुर्यात्। व्यञ्जनार्थं हस्तादिनापि संज्ञां न कुर्यात्। श्राद्धकर्ता दर्भेष्वासीनः सप्रणवव्याहृतिकां गायत्रीम्, 'ॐ मधु व्वाता' इत्यादृचम्, 'ॐ मधु मधु मधु' इति च जपेत्। गायत्रीं ब्राह्मणमनुश्रावयेत्। 'ॐकृणुष्व पाज' इत्यादींरक्षोघ्नान्मन्त्रान्पठित्वा भूमिं तिलैरास्तीर्य्य श्राद्धीयब्राह्मणं पितृरूपतया ध्यात्वा (१)'ॐ उदीरताम्' इत्यादिपितृमन्त्रान्, 'ॐ सहस्रशीर्षा' इत्यादि पुरुषसूक्तम्, 'ॐ आशुः शिशान' इत्यादिकमप्रतिरथमन्यानि च शिवसङ्कल्पप्रभृतीनि पवित्राणि ऋग्यजुस्सामानि, रुचिस्तवप्रभृ-

---

(१) ॐ उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः।
असुं यऽईयुरवृका ऽऋत ज्ञास्तेनोवन्तु पितरो हवेषु॥
अङ्गिरसो नः पितरो नवग्वा ऽअथर्वाणो भृगवः सोम्यासः।
तेषां वयꣳ सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम॥
आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः।
अस्मिन्यज्ञे स्वधया मदन्तोधिब्रुवन्तु तेऽवन्त्वस्मान्॥
ऊर्जं वहन्तीरमृतं घृतं पयः कीलालम्परिस्रुतम्।
स्वधास्थ तर्पयत मे पितॄन्॥

पितृभ्यः स्वधायिभ्यः स्वधानमः पितामहेभ्यः स्वधायिभ्य स्वधानमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधानमः।

अक्षन् पितरोमीमदन्त पितरोऽतीतृपन्तपितरः पितरः शुन्धध्वम्॥
ये चेह पितरो ये च नेह यांश्च विद्म याँ२ उ च न प्रविद्म।
त्वं वेत्थ यति ते जातवेदः स्वधाभिर्यज्ञꣳ सुकृतं जुषस्व॥
मधुव्वाता० इति त्र्यृचम्।

तीनि यथाशक्ति जपेत्। 'ॐ नमस्तुभ्यं विरूपाक्ष०' इति श्लोकमपि पठेत्। वीणाध्वनिभिर्ब्राह्मणं हर्षयन् व्यञ्जनगुणान् 'इदमम्लम्' इत्यादिक्रमेण कीर्तयन् यत्र यत्रेच्छोपलभ्यतेऽस्य तत्तदुपलक्षयन् मन्दं मन्दं भोजयेत्। ततस्तृप्तं ब्राह्मणं ज्ञात्वा पितामहपात्रसन्निधावास्तृतदक्षिणाग्रकुशत्रय्यां भूमिं प्रोक्ष्य सर्वप्रकारकमन्नमादाय सतिलघृतजलेनाप्लाव्य—'ॐ अनग्निदग्धा०' इति श्लोकं पठित्वा कुशोपरि तदन्नं विकिरेत्(१)। ततः सव्यं कृत्वाऽऽचामेत्(२)। हरिं स्मृत्वा अपसव्येन पात्रब्राह्मणाय 'ॐ इदं ते प्रत्यापोशानम्' इति जलगण्डूषं दत्त्वा 'ॐ स्वदितम्' इति पृष्ट्वा 'ॐ सुस्वदितम्' इति तेनोक्ते 'ॐ पिण्डानहं करिष्ये' इति पृच्छेत्। 'ॐ कुरुष्व' इत्यनुज्ञातः पात्रब्राह्मणायाचमनार्थं पात्रं दापयेत्। ततः प्रेतपिण्डदानार्थं पात्रं दापयेत्। ततः प्रेतपिण्डार्थमेकामपरां पितामहादित्रिकपिण्डदानार्थमेकहस्तमितां (चतुरस्रां) चतुरङ्गुलोच्छ्रितां सैकतीं दक्षिणप्लवां पिण्डिकां निर्माय तन्मध्ये वामेन पाणिना दर्भपिञ्जुलीं गृहीत्वा दक्षिणहस्तेन कृत्वा तन्मूलेन सव्योपगृहीतदक्षिणपाणिना 'ॐ अपहता' इत्यादि पठित्वा दक्षिणाग्रां रेखां प्रादेशप्रमाणां सकृदुल्लिख्य दर्भपिञ्जुलीमुत्तरस्यां दिशि क्षिपेत्।

---

(१) यजमानस्य दासादीनुद्दिश्य द्विजसत्तम।
तस्मादन्नं त्यजेद्भूमौ वामभागे तु पैतृके॥

इति नि० श्राद्धकारिकायां पितृवामभागे विधानात् नैर्ऋत्यां विकिरदानं फलति।

(२) ततः प्रक्षाल्य हस्तौ च द्विराचम्य हरिं स्मरेत्।
इति नि० ब्राह्मोक्तेरत्र द्विराचमनं युक्तम्।

एवमेवापरपिण्डिकायामप्येकां रेखां कुर्यात्। ततः पूर्वपिण्डिकारेखोपरि 'ॐ ये रूपाणि' इत्यादि मन्त्रेणाङ्गारं भ्रामयित्वा एवमेवापररेखायामप्यङ्गारं भ्रामयित्वा दक्षिणतः क्षिपेत्। तत उभयत्र रेखायामुपमूलसकृल्लूनान्दक्षिणाग्रान्कुशानास्तृणुयात्। ततः सव्यं कृत्वा 'ॐ देवताभ्य०' इति त्रिर्जपेत्। ततोऽपसव्यं कृत्वा पुटकचतुष्टये जलतिलगन्धपुष्पाणि क्षिप्त्वा एकं पुटकं वामहस्ते कृत्वा मोटकादीन्यादाय—'ॐ अद्यामुकगोत्र पितरमुकप्रेत सपिण्डीकरणश्राद्धे पिण्डस्थानेऽत्रावनेनिक्ष्व ते मया दीयते तवोपतिष्ठताम्' इति पूर्वपिण्डिकायां छिन्नमूलकुशोपरि अवनेजनजलं दद्यात्। ततोऽपरं पुटकं वामहस्ते कृत्वा मोटकादीन्यादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धपिण्डस्थानेऽमुकगोत्र पितामहामुकशर्मन्नत्राऽवनेनिक्ष्व ते स्वधा' इति द्वितीयपिण्डिकायामास्तृतकुशमूलसन्निधाने पितामहायावनेजनजलं दद्यात्। ततोऽपरपुटकं वामहस्ते कृत्वा दक्षिणहस्तेन मोटकादीन्यादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धपिण्डस्थानेऽमुकगोत्र प्रपितामहामुकशर्मन्नत्राऽवनेनिक्ष्व ते स्वधा' इत्यास्तृतकुशमध्ये प्रपितामहायावनेजनजलं दद्यात्। ततोऽपरं पुटकं वामहस्ते कृत्वा मोटकादीन्यादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे पिण्डस्थानेऽमुकगोत्र वृद्धप्रपितामहामुकशर्मन्नत्राऽवनेनिक्ष्व ते स्वधा' इत्यास्तृतकुशाग्रे वृद्धप्रपितामहायावनेजनजलं दद्यात्। (१) (ततः सर्वंत्रअनति-

(१) कंसान्तर्गतं नास्ति क० ख०।

लजलमध्वाज्यसहितान्नेन प्रेतपिण्डं, सर्वव्यञ्जनतिलजलमध्वाज्यहुतशेषान्नेन पितामहादिपिण्डत्रयं च निर्माय चतुरः पिण्डान्मधुघृताभ्यामभिघार्य प्रथमं प्रेतपिण्डं ) (१) दक्षिणहस्तेन मोटकतिलजलानि चादाय—'ॐ अद्यामुकगोत्र पितरमुकप्रेत सपिण्डीकरणश्राद्धे एष पिण्डस्ते मया दीयते तवोपतिष्ठताम्' इति पूर्वपिण्डिकायां कुशोपरि पित्रे पिण्डं दद्यात् । ततोऽपरपिण्डं मोटकादीनि चादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धेऽमुकगोत्र पितामहामुकशर्मन्नेष ते पिण्डः स्वधा' इति द्वितीयपिण्डिकायां प्रथमावनेजनस्थाने पितामहाय पिण्डं दद्यात् । पुनर्मोटकादीनि पिण्डं चादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धेऽमुकगोत्र प्रपितामहामुकशर्मन्नेष ते पिण्डः स्वधा' इति प्रपितामहायाऽपरावनेजनस्थाने पिण्डं दद्यात् । पुनर्मोटकादीनि पिण्डं चादाय—'ॐ आद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धेऽमुकगोत्र वृद्धप्रपितामहामुकशर्मन्नेष ते पिण्डः स्वधा' इति वृद्धप्रपितामहायाऽपरावनेजनस्थाने पिण्डं दद्यात् । ततः पितामहादिपिण्डास्तरणकुशमूले 'ॐ लेपभागभुजस्तृप्यन्तु' इति करं प्रोञ्छ्य सव्यं कृत्वाऽऽचम्य हरिं स्मरेत् । ततोऽपसव्यं कृत्वा दक्षिणाभिमुखः पितरमुद्दिश्य 'ॐ अत्र पितर्मादयस्व यथाभागमावृषायस्व' इति पठित्वोत्तराभिमुखो भूत्वा श्वासं नियम्य भास्वरमूर्तिं पितरं ध्यायन् मुखं दक्षिणां दिशं प्रत्यावर्तयन् 'ॐ अमीमदत पिता यथाभागमावृषायिष्ट'

(१) 'ततो दक्षिणहस्तेन मोटकतिलजलपिण्डं चादाय-' क० ख०

इति पठेत्। पितामहादीनुद्दिश्य दक्षिणाभिमुखः 'ॐ अत्र पितरो मादयध्वं यथाभागमावृषायध्वम्' इति पठेत्। उत्तराभिमुखो भूत्वा श्वासं नियम्य तुष्टान्भास्वरमूर्तीन् पितामहादीन्ध्यायन् मुखं दक्षिणां दिशं प्रत्यावर्तयन् 'ॐ अमीमदन्त पितरो यथाभागमावृषायिषत' इति पठेत्। ततः प्रेतावनेजनपात्रं वामहस्ते कृत्वा मोटकादीन्यादाय—'ॐ अद्यामुकगोत्र पितरमुकप्रेत सपिण्डीकरणश्राद्धे पिण्डेऽत्र प्रत्यवनेनिक्ष्व ते मया दीयते तवोपतिष्ठताम्' इति पिण्डे प्रत्यवनेजनं दत्त्वा पितामहावनेजनपात्रं वामहस्ते कृत्वा मोटकादीन्यादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे पिण्डेऽमुकगोत्र पितामहामुकशर्मन्नत्र प्रत्यवनेनिक्ष्व ते स्वधा' इति पितामहाय प्रत्यवनेजनजलं दद्यात्। प्रपितामहावनेजनपात्रं वामहस्ते गृहीत्वा मोटकादीन्यादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे पिण्डेऽमुकगोत्र प्रपितामहामुकशर्मन्नत्र प्रत्यवनेनिक्ष्व ते स्वधा' इति प्रपितामहाय प्रत्यवनेजनं दद्यात्। ततोऽवशिष्टजलयुतं पुटकमादाय मोटकादीनि च—'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे पिण्डेऽमुकगोत्र वृद्धप्रपितामहामुकशर्मन्नत्र प्रत्यवनेनिक्ष्व ते स्वधा' इति वृद्धप्रपितामहाय प्रत्यवनेजनं दद्यात्। ततो नीवीं विस्रस्य सव्यं कृत्वाऽऽचम्य हरिं स्मृत्वा अपसव्यं कृत्वा वामेन पाणिना धृतं सूत्रं दक्षिणेनादाय 'ॐ एतत्ते पितर्वासः' इत्युभाभ्यां हस्ताभ्यां ( पितृ ) पिण्डोपरि सूत्रं धारयेत्। पूर्ववत्पुनः सूत्रमादाय—

'ॐ नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरा नमो वो गृहान्नः पितरो दत्त सतो वः पितरो देष्मैतद्वः पितरो व्वासः ॥

'ॐ एतद्वः पितरो वासः' इति मन्त्रं पठित्वा प्रत्येकं पिण्डोपरि सूत्रं धारयेत् । ततो मोटकादीन्यादाय—'ॐ अद्यामुकगोत्र पितरमुकप्रेत सपिण्डीकरणश्राद्धे पिण्डे एतद्वासस्ते मया दीयते तवोपतिष्ठताम्' इति पित्रे सूत्रमुत्सृजेत् । पुनर्मोटकादीन्यादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे पिण्डेऽमुकगोत्र पितामहामुकशर्मन्नेतत्ते वासः स्वधा' इति सूत्रं पितामहायोत्सृजेत् । मोटकादीन्यादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे पिण्डेऽमुकगोत्र प्रपितामहामुकशर्मन्नेतत्ते वासः स्वधा' इति प्रपितामहायोत्सृजेत् । पुनर्मोटकादीन्यादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे पिण्डेऽमुकगोत्र वृद्धप्रपितामहामुकशर्मन्नेतत्ते वासः स्वधा' इति वृद्धप्रपितामहाय सूत्रमुत्सृजेत् । ततः प्रत्येकं पितृपिण्डादिषु गन्धपुष्पधूपदीपताम्बूलानि दद्यात् । ततः पिण्डसमीपे तत्तत्पिण्डशेषान्नं विकिरेत् । ततः पिण्डेषु यत् सूत्रादिकमपनीय हस्तद्वयेन सुवर्णरजतकुशानादाय 'ॐ ये समानाः' इत्यादि मन्त्रद्वयं पठित्वा प्रेतपिण्डं त्रिधा विभजेत् । द्विवारं मन्त्रपाठः । ततः प्रथमपिण्डभागमादाय—

ॐ ये समानाः समनसः पितरो यमराज्ये।
तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पताम्॥
ये समानाः समनसो जीवा जीवेषु मामकाः।
तेषाᳬश्रीर्मयि कल्पतामस्मिँल्लोके शतᳬ समाः॥

इति मन्त्रद्वयेन पितामहपिण्डे नियोजयेत्। एवं द्वितीयपिण्डभागमादाय मन्त्रद्वयेन प्रपितामहपिण्डे नियोजयेत्। एवं तृतीयपिण्डभागमादाय मन्त्रद्वयेन वृद्धप्रपितामहपिण्डे नियोजयेत्। ततः प्रेतभागेन सह पिण्डत्रयं प्रत्येकमेकीकृत्य समं वर्तुलं कुर्यात्। ततः प्रेतपूर्वकं पितामहादीनुद्दिश्य पिण्डत्रयेऽर्घपुष्पधूपदीपनैवेद्यताम्बूलानि दद्यात्। ततः सव्येन देवान्नपात्रे 'ॐ शिवा आपः सन्तु' इति जलं दत्वा अपसव्येन पितृब्राह्मणहस्ते पूर्वमन्त्रेण जलं दद्यात्। 'ॐ सन्तु' इति तत्प्रतिवचनम्। ततः पितामहाद्यन्नपात्रेषु प्रत्येकं जलं दद्यात्। अनेनैव क्रमेण 'ॐ सौमनस्यमस्तु' इति देवान्नपात्रे पुष्पम्। ततोऽपसव्येन पितृब्राह्मणहस्ते अनेनैव मन्त्रेण पुष्पम्। 'ॐ अस्तु' इति प्रतिवचनम्। ततः पितामहाद्यन्नपात्रत्रिकेऽनेनैव मन्त्रेण प्रत्येकं पुष्पं दद्यात्। ततः सव्येन देवान्नपात्रे 'ॐ अक्षतं चारिष्टमस्तु' इति तण्डुलप्रक्षेपः। ततोऽपसव्येन प्रेतश्राद्धपात्रब्राह्मणहस्ते 'ॐ अक्षतं चारिष्टमस्तु' इति तण्डुलप्रक्षेपः। 'ॐ अस्तु' इति ब्राह्मणप्रतिवचनम्। पितामहाद्यन्नपात्रत्रिकेऽपि प्रत्येकम् 'ॐ अक्षतं चारिष्टमस्तु' इति तण्डुलप्रक्षेपः। ततो मोदकादीन्यादाय 'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणश्राद्धे दत्तैतदन्नपानादिकमुपतिष्ठताम्' इति पितुरक्षय्योदकं पा-

त्रब्राह्मणकरे उत्सृजेत् । 'ॐ उपतिष्ठताम्' इति ब्राह्मणप्रतिव-चनम् । पुनर्मोटकादीन्यादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुक-प्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धेऽमुकगोत्रस्य पितामहस्यामु-कशर्मणो दत्तैतदन्नपानादिकमक्षय्यमस्तु' इति पितामहायाक्ष-य्योदकं दद्यात् । पुनर्मोटकादीन्यादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धेऽमुकगोत्रस्य प्रपि-तामहस्यामुकशर्मणो दत्तैतदन्नपानादिकमक्षय्यमस्तु' इति प्रपि-तामहायाक्षय्योदकं दद्यात् । पुनर्मोटकादीन्यादाय—'ॐ अद्या-मुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धेऽमुक-गोत्रस्य वृद्धप्रपितामहस्यामुकशर्मणो दत्तैतदन्नपानादिकमक्षय्य-मस्तु' इति वृद्धप्रपितामहायाक्षय्योदकं दद्यात् । ततः सव्यं कृत्वा कृताञ्जलिस्तन्मनाः सुमना दक्षिणां दिशं पश्यन् 'ॐ अघोराः पितरः सन्तु' इति पितामहादिपिण्डत्रयोपरि पूर्वाग्रां जलधारां दद्यात् । 'ॐ सन्तु' इति ब्राह्मणप्रतिवचनम् । अत्र वारिधारादानमाचारात् । अन्यथा तु पाठमात्रम् । ततः प्राङ्मुखः 'ॐ गोत्रं नो वर्द्धताम्' इति पठेत् 'ॐ वर्द्धताम्' इति प्रतिवचनम् ।

ॐ दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च ॥
श्रद्धा च नो मा व्यगमद्बहुदेयं च नोऽस्तु ॥
अन्नं च नो बहु भवेदतिथींश्च लभेमहि ॥
याचितारश्च नः सन्तु मा च याचिष्म कंचन ॥

'एताः सत्या आशिषः सन्तु' इति याचेत् । 'ॐ सन्तु' इति प्रतिवचनम् । ततोऽपसव्यं कृत्वा पिण्डोपरि सपवित्रकुश-

त्रयं दक्षिणाग्रमास्तीर्य 'ॐ नमो वाचयिष्ये' इति ब्राह्मणं ब्रूयात्। 'ॐ वाच्यताम्' इत्यनुज्ञातः 'ॐ पित्रे नमः उच्यताम्' इति ब्राह्मणं ब्रूयात्। 'ॐ अस्तु नमः' इति ब्राह्मणो वदेत्। ततो वामहस्तोद्धृतं जलपात्रं दक्षिणेनादाय—

ॐ ऊर्ज्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम्।
स्वधा स्थ तर्प्पयत मे पितॄन्॥

इति पित्रादीनुद्दिश्य सपवित्रकुशोपरि दक्षिणाग्रां जलधारां दद्यात्। ततो नम्रीभूय पिण्डानाघ्रायोत्थापयेत्। पिण्डाधारकुशानुल्मुकञ्च वह्नौ प्रक्षिपेत्। सव्येन देवार्घ्यपात्रं सञ्चाल्य अपसव्येन पित्राद्यर्घ्यपात्राण्युत्तानीकृत्य दक्षिणां दद्यात्। ततः सव्येन कुशत्रययवजलदक्षिणाद्रव्याण्यादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धेऽमुकगोत्रपितामहप्रपितामहवृद्धप्रपितामहानाममुकामुकशर्म्मणां श्राद्धसम्बन्धिनां विश्वेषां देवानां कृतैतच्छ्राद्धप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे,' इति प्राङ्मुख उत्सृजेत्। ततोऽपसव्यं कृत्वा दक्षिणाभिमुखो मोटकतिलजलान्यादाय दक्षिणाद्रव्यं चादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य कृतैतत्सापिण्डीकरणश्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतममुकगोत्रायामुकशर्म्मणे ब्राह्मणाय दक्षिणां तुभ्यमहं संप्रददे' इति दक्षिणां पितृब्राह्मणकरे दद्यात्'ॐ स्वस्ति' इति प्रतिवचनम्। पुनस्तथैव दक्षिणाद्रव्यादिकमादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे कृतैतदमुकगोत्रपितामहामुकशर्म्मश्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतं यथानाम-

गोत्राय ब्राह्मणाय 'दक्षिणां दातुमहमुत्सृजे' इति पितामहश्राद्ध-दक्षिणां दद्यात् । पुनर्दक्षिणाद्रव्यादिकमादाय—'ॐ अद्यामुक-गोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे कृतैतदमुक-गोत्रप्रपितामहामुकशर्मश्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतं यथा-नामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे' इति प्रपितामह-श्राद्धदक्षिणां दद्यात् । पुनर्दक्षिणाद्रव्यादिकमादाय—'ॐ अद्या-मुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धे कृतैत-दमुकगोत्रवृद्धप्रपितामहामुकशर्मश्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदै-वतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे' इति वृद्धप्रपितामहश्राद्धदक्षिणां दद्यात् । ततः सव्यं कृत्वा 'ॐ वि-श्वेदेवाः प्रीयन्ताम्' इति देवविसर्जनं कृत्वाऽपसव्यं कृत्वा पितृ-श्राद्धब्राह्मणम् 'ॐ निरोङ्कारं स्वस्ति ब्रूहि' इति वदेत् । 'स्वस्ति' इति तेनोक्ते 'स्वस्त्यस्तु' इति पितृब्राह्मणं विसृज्य गृहीतपितृ-ब्राह्मणाङ्गुष्ठो गृहीतोदकपात्रो बहिर्निमन्त्रणस्थानमागत्य ब्राह्मणं स्थापयित्वा—

ॐ आ मा व्वाजस्य प्रसवो जगम्यादेमे द्यावापृथिवी व्विश्वरूपे ।
आ मा गन्तां पितरा मातरा चा मा सोमोऽअमृतत्वेन गम्यात् ॥

इति प्रदक्षिणीकुर्वन् पूर्ववदुदकधारया त्रिर्वेष्टयेत् । ततः प्रणम्याष्टौ पादाननुव्रज्य प्रदक्षिणीकृत्याभिवादयेत् । ततः सव्यं कृत्वा 'ॐ देवताभ्यः०' इति त्रिर्जपेत् । ततो गृहं प्रविश्य सव्यापसव्याभ्यां देवपितृश्राद्धदीपान्पाणिभ्यां निर्वापयेत् (१)।

---

(१) निवृत्ते पितृमेधे तु दीपं प्रच्छाद्य पाणिना ।
प्रक्षाल्य पाणी आचम्य ज्ञातीन् शेषेण भोजयेत् ॥

ततः सव्येन पाणिपादप्रक्षालनमाचमनं च कुर्यात्। ततः 'ॐ प्रमादात्' इत्यादि पठित्वा एतत्फलकामो विष्णुं स्मरेत्। अपरश्राद्धचतुष्टयद्रव्यप्रतिपत्तिं ब्राह्मणाय कुर्यात्। पिण्डाञ्जले प्रतिपादयेत्। उच्छिष्टमार्जनं कुर्यात्। वैश्वदेवकल्पनानन्तरं दशप्रभृतिश्रोत्रियान्यथाशक्ति भोजयेत्। ज्ञातिभिर्मिलित्वा सह भुञ्ज्यात्।

इति श्राद्धविवेके सपिण्डनपद्धतिः।

सपिण्डीकरणकालव्यवस्थायामपि वत्सराभ्यन्तरे चैतानि षोडशश्राद्धानि केनचिद्विस्मरणादिना न कृतानि तस्य कृष्णैकादश्यां तन्मृताहे वा षोडशश्राद्धानि कर्तव्यानीति मिताक्षराश्राद्धपल्लवाद्यैर्लिखितम्। युक्तं चैतत्। एकोद्दिष्टरूपश्राद्धस्य कृष्णैकादश्यां विधानात् एषां चैकोद्दिष्टरूपत्वात्। अथ चाधिकारिणि कृतषोडशश्राद्धसङ्कल्पे सपिण्डनमकृत्वा विपन्ने कनिष्ठेनावशिष्टश्राद्धानि कार्याणीति श्राद्धप्रदीपः। एषु सर्वेषु प्रेतश्राद्धादिषु शेषान्नभोजनं न कर्तव्यम्। यदाह देवलः—

एकोद्दिष्टस्य शेषं तु ब्राह्मणाय समुत्सृजेत्।
ततः परं तु भुञ्जीत स्वयं मङ्गलभोजनम्॥

---

इति श्राद्धतत्त्वे देवलस्मरणात् श्राद्धान्ते दीपप्रच्छादनं लभ्यते। अतोऽत्र प्रच्छादनमाच्छादनं नतु निर्वापणं युक्तम्।

दीपनिर्वापणात्पुंसः कूष्माण्डच्छेदनात् स्त्रियः।
अचिरेणैव कालेन वंशनाशो भवेद्ध्रुवम्॥

इति नव्यवर्धमानधृतवचनादिति तत्रैव रघुनन्दनोक्तेः।

अस्यार्थः—प्रेतश्राद्धे श्राद्धार्थे यत्किञ्चित्साधितमोदकादि तत्सर्वं ब्राह्मणायैव प्रतिपादयेत् । नोद्धारयेत् । स्वयं मङ्गलभोजनं कुर्यात् । पृथक्पाकसाधितान्नभोजनं कुर्यात् । पृथक्पाकस्य मङ्गलस्वरूपत्वात् । सपिण्डने पितामहादिश्राद्धशेषान्नस्यैकपाकसाधितत्वात्प्रेतश्राद्धशेषान्नत्वादेव त्यागः । सपिण्डनानन्तरं वर्षद्वयं यावत् श्राद्धदत्तसिद्धान्नस्यापि भोजनं न कर्तव्यम् । तथा च श्राद्धान्नभोजननिषेधे शातातपः—

नवश्राद्धं ग्रामयाजकान्नं संग्रहभोजनम् ।
नारीणां प्रथमे गर्भे भुक्त्वा चान्द्रायणं चरेत् ॥
चान्द्रायणं नवश्राद्धे पराको मासिके मतः ।
मासत्रयेऽतिकृच्छ्रः स्यात्षाण्मासे कृच्छ्र एव हि ॥
आब्दिके कृच्छ्रपादः स्यादेकाहः पुनराब्दिके ।
अत ऊर्द्धं न दोषः स्याच्छङ्खस्य वचनं यथा ॥

अत्र नवश्राद्धमेकादशाहश्राद्धम् । ग्रामयाजकान्नं प्रसिद्धमेव । संग्रहभोजनं चन्द्रसूर्ययोरुपरागकाले भोजनम् । नारीणां प्रथमगर्भसंस्कारभोजनम् । आब्दिके प्रथमसांवत्सरिके, पुनराब्दिके, द्वितीयसांवत्सरिके तदुपकरणवस्त्रादिग्रहणं वर्षद्वयेऽपि कुर्वन्तीति सदाचारः । स्त्रीशूद्रकर्तृकेऽस्मिञ्छ्राद्धे 'स्वधा' पदस्थाने 'नमः' पदप्रयोगः कर्तव्यः । स्त्रियाः सपिण्डने जीवति पत्यौ श्वश्र्वादिभिः सपिण्डनं कार्यम् । मृते पत्यौ पतिश्वशुरादिभिः सह मेलनं कार्यम् । पतिपुत्ररहितायाः सपिण्डनमेव निषिद्धम् । तथा च मार्कण्डेयपुराणे—

सपिण्डीकरणं तासां पुत्राभावे न विद्यते ।

अत्र पुत्राभाव इत्युपलक्षणं पतिपुत्राभाव इति द्रष्टव्यम् । पतिकर्तृकस्य स्त्रीसपिण्डनस्य विधानात् । एवं सपत्नीपुत्रे विद्यमाने स्त्रियाः सपिण्डनं भवति ।

वह्वीनामेकपत्नीनां यद्येका पुत्रिणी भवेत् ।
सर्वास्तेनैव पुत्रेण पुत्रिण्यो मनुरब्रवीत् ॥ इति ।

सपत्नीपुत्रवत्याः पुत्रिणीत्वातिदेशेनापुत्रत्वाभावात् । एवं त्रैवर्णिकजातस्य शूद्रस्य सपिण्डनं निषिद्धम् ।

नीयते तु सपिण्डत्वं येषां शूद्रकुलोद्भवे ।
सर्वे शूद्रत्वमायान्ति यदि स्वर्गजितोऽपि ते ॥

इति शङ्खलिखितवाक्यात् । यत्र सपिण्डनं निषिद्धं तत्र ब्रह्मपुराणोक्तषोडशश्राद्धैः प्रेतत्वविमुक्तिः । तथा च ब्रह्मपुराणे—

नृणां तु त्यक्तदेहानां श्राद्धाः षोडशसङ्ख्यया ।
चतुर्थे पञ्चमे चैव नवमैकादशे तथा ॥
ततो द्वादशभिर्मासैः श्राद्धं द्वादशसङ्ख्यया ।
कर्तव्यं शुचिभिस्तेषां ततो विप्रांस्तु भोजयेत् ॥ इति ।

अत्र च मृतकार्येषु मरणदिनावधिकदिनमासादिगणनाच्चतुर्थदिनादित्वं मरणदिनावधिकमेव ज्ञेयम् । तथा चाशौचाभ्यन्तरेऽपि चतुर्थदिनादिषु श्राद्धं कर्तव्यम् । अत्र च वर्षं यावत्सपिण्डनकालेषु निषिद्धनक्षत्रसम्भवे निषिद्धनक्षत्रे सपिण्डननिषेधात् तत्रापि ब्रह्मपुराणीयषोडशश्राद्धानि कर्तव्यानीति बहुषु निबन्धेषु लिखितम् । लोकास्तु निषिद्धनक्षत्रेऽपि सपिण्डनकरणे पित्रादिकरणे कुलदोषाभावात्स्वमात्रगतानिष्टसम्भवान्नक्षत्रानुरोधं नाचरन्ति । अत्रावीरायाः सपिण्डकर्तृकषोड-

श्राद्धविधिर्लिख्यते—तत्र सपिण्डेनाशौचाभ्यन्तर एव चतुर्थदिने श्राद्धं कर्तव्यम् । तत्र प्रथमतोऽस्थिसञ्चयनिमित्तकमेकोद्दिष्टं कृत्वाऽस्थिसञ्चये कृते पुनः स्नात्वा श्राद्धं कर्तव्यम् । तत्र मध्याह्ने शुचिराचान्तो यजमानसवर्णेनाहूतं ब्राह्मणं स्नातमाचान्तं गोमयोपलिप्तायां मण्डपाद्बहिर्भूमौ गोमूत्रेणापसव्यवत्कृतमण्डलायाम् 'ॐ भूम्यै नमः' इति त्रिरक्षतपुष्पपूजितायामास्तृतदक्षिणाग्रकुशत्रयायां तिष्ठन् 'ॐ स्वागतम्' इति पृच्छेत् । 'ॐ सुस्वागतम्' इति तेनोक्ते उभावप्युपविशतः । ततः पुटके जलं कृत्वा 'ॐ इदं ते पाद्यम्' इत्युपनीय पात्रब्राह्मणपादयोर्दद्यात् । ततोऽपसव्यं कृत्वा पुष्पचन्दनताम्बूलानि ब्राह्मणाय दत्त्वा ब्राह्मणदक्षिणजानुदक्षिणकरेण स्पृष्ट्वा 'ॐ अद्यामुकगोत्रायाः सपिण्डाया अमुकप्रेतायाश्चतुर्थदिनश्राद्धकरणाय भवन्तं ब्राह्मणमहमामन्त्रये' इत्युक्ते 'ॐ आमन्त्रितोऽस्मि इति तत् प्रतिवचनम् । 'ॐ अक्रोधनेन' इत्यादिना 'ॐ सर्वायासविनिर्मुक्तेन' इत्यादिना च नियमाञ्छ्रावयेत् । 'ॐ भवितव्यम्' इति तेनोक्ते जलतिलगन्धपुष्पाणि पुटके कृत्वा—'ॐ अद्यामुकगोत्र सपिण्डेऽमुकप्रेते चतुर्थदिनश्राद्धे एष पादार्घस्ते मया दीयते तवोपतिष्ठताम्' इति मोटकादिना पाद्यार्घं दद्यात् । ततः आचमनीजलं नमस्कृत्य जानुनि विश्राव्य 'ॐ इदं ते आचमनीयम्' इत्याचमनीयं समर्पयेत् । ततः सव्येन स्वयमाचम्य तमाचम्याग्रे कृत्वा श्राद्धदेशमागच्छेत् । तत्र प्राङ्मुख उपविशेत् । 'ॐ सिद्धम्' इति वदेत् तत्रासने 'अत्रास्थ' इति ब्राह्मणमङ्गुष्ठेन गृहीत्वा सकुशे आसने उत्तराभिमुखमुपवेशयेत् । पादयोस्तले

दक्षिणाग्रं कुशत्रयं दद्यात्। आसनसमीपे तु तिलतैलेन रक्षा-दीपं स्थापयेत्। ततः 'ॐ अपवित्रः' इत्यादि पठित्वा 'ॐ पु-ण्डरीकाक्षः पुनातु' इति कुशत्रयजलेन सर्वाणि श्राद्धीयद्रव्या-ण्यात्मानं च सिञ्चेत्। ततः कुशत्रयतिलजलान्यादाय—'ॐ अ-द्यामुकगोत्रायाः सपिण्डाया अमुकप्रेतायाः प्रेतत्वविमुक्तिकामः अद्यादि यथाकालं षोडशश्राद्धान्यहं करिष्ये' इति सङ्कल्पयेत्। पुनः कुशत्रयतिलजलान्यादाय—'ॐ अद्यामुकगोत्रायाः सपि-ण्डाया अमुकप्रेतायाः प्रेतत्वविमुक्तिहेतुकषोडशश्राद्धान्तर्गतच-तुर्थदिनश्राद्धमहं करिष्ये' इति वदेत्। 'ॐ कुरुष्व' इति प्रति-वचनम्। 'ॐ गायत्रीजपमहं करिष्ये' इति वदेत्। 'ॐ कुरुष्व' इति तत्प्रतिवचनम्। ततः सप्रणवव्याहृतिकां गायत्रीं त्रिर्ज-पित्वा 'ॐ देवताभ्यः०' इति त्रिर्जपेत्। ततोऽपसव्यं कृत्वा मोटकादीन्यादाय—ॐ अद्याऽमुकगोत्रे सपिण्डे अमुकप्रेते चतु-र्थदिनश्राद्धे इदमासनं ते मया दीयते तवोपतिष्ठताम्' इत्यास-नमुत्सृजेत्। ततः 'ॐ अपहता' इत्यादिना श्राद्धदेशे वामाव-र्तेन तिलान्विकिरेत्। ततः 'ॐ आयन्तु न०' इति मन्त्रं जपेत्। ततोऽर्घपात्रे पवित्रं कृत्वा 'शन्नोदेवी०' इति जलं, ॐ तिलो-ऽसि' इति स्वाहान्तेन तिलान् क्षिप्त्वा तुष्णीं गन्धपुष्पं क्षिपेत्। ततोऽर्घपात्रं वामहस्ते कृत्वा पवित्रं पात्रब्राह्मणकरे उत्तराग्रं धृत्वा तदुपरि किञ्चिदुदकान्तरं दत्त्वा 'ॐ या दिव्या०' इति पठित्वा मोटकादीन्यादाय—'ॐ अद्यामुकगोत्रे सपिण्डेऽमुकप्रेते चतुर्थदिनश्राद्धे एष हस्तार्घस्ते मया दीयते तवोपतिष्ठताम्' इति विप्रकरे अर्घजलं दददुत्सृजेत्। ततस्तदर्घपात्रं पवित्रसहितं

ब्राह्मणवामपार्श्वे 'ॐ सपिण्डायै स्थानमसि' इति न्युब्जीकरणम् । ततो मोटकादीन्यादाय–'ॐ अद्यामुकगोत्रे सपिण्डेऽमुकप्रेते चतुर्थदिनश्राद्धे एतानि गन्धपुष्पधूपदीपताम्बूलसिन्दूरवासांसि ते मया दीयन्ते तवोपतिष्ठन्ताम्' इति गन्धादीनुत्सृजेत् । ततः पात्रस्य चतुर्दिशं चतुष्कोणं मण्डलं कुर्यात् । ततः श्राद्धीयान्नव्यञ्जनाद्यग्रभागं गृहीत्वा घृततिलजलसहितं तदन्नम् 'ॐ इदमन्नमेतद्भूस्वामिपितृभ्यो नमः' इति मोटकादिना दद्यात् । ततः कराभ्यां ताम्रपात्रमादाय तेनान्नं गृहीत्वा मनाक्स्थित्वा सपिण्डां ध्यात्वा भोजनपात्रे पुरुषतृप्तिक्षममन्नं परिविष्यात् । पुटकान्तरेषु व्यञ्जनान्तराणि घृतं जलं चोपनीय अन्नोपरि पुटकादीना हस्ताभ्यां मधु दद्यात् । 'ॐ मधुव्वाताऽऋतायते' इति त्र्यृचं, 'ॐ मधु मधु मधु' इति च जपेत् । ततो व्यस्ताऽनुत्तानपाणिभ्यामन्नपात्रमालभ्य 'ॐ पृथिवी ते पात्रम्' इत्यादि जपित्वा 'ॐ इदं विष्णुः०' इति पठन्नमृतरूपतयाऽन्नं विचिन्त्य 'ॐ कृष्ण कव्यमिदं रक्ष मदीयम्' इति पठित्वा 'ॐ इदमन्नम्' 'ॐ इमा आपः' 'ॐ इदमाज्यम्' 'ॐ इदं हविः' इति पात्रब्राह्मणदक्षिणहस्ताङ्गुष्ठमन्नजलघृतान्नेषु निवेश्य 'ॐ अपहता' इत्यादिनाऽन्नोपरि बहूंस्तिलान्विकीर्य वामेन पाणिना पात्रमत्यजन्–'ॐ अद्यामुकगोत्रे सपिण्डेऽमुकप्रेते चतुर्थदिनश्राद्धे इदमन्नं सोपकरणं ते मया दीयते तवोपतिष्ठताम्' इत्यन्नमुत्सृजेत् । 'ॐ भवान्प्राशयतु' इति ब्राह्मणाय जलगण्डूषं दद्यात् । ततो गायत्रीं, 'ॐ मधु व्वाता' इत्यादि त्र्यृचम्, 'ॐ मधु मधु मधु' इति च जपित्वा 'ॐ अन्न हीनम्'

इत्यादि पठित्वा 'ॐ यथासुखं जुषस्व' इति ब्राह्मणं ब्रूयात् । ब्राह्मणो वामेन पाणिना पात्रमत्यजन् 'ॐ कारपूर्वकं भुञ्जीत । त्वराक्रोधादिकं (१) वर्जयेत् । व्यञ्जनाद्यर्थं हस्तादिना संज्ञामपि न कुर्यात् । श्राद्धकर्ता दर्भेष्वासीनो गायत्रीं, मधुव्वातादिकं जपेत् । ब्राह्मणं गायत्रीमनुश्रावयेत् । 'ॐ कृष्णुष्व पाज' इत्यादिरक्षो-

---

(१) आदिपदेन—

यश्च फूत्कारवद् भुङ्क्ते यश्च पाणितले द्विजः ।
न तदश्नन्ति पितरो यश्च वायुं समुत्सृजेत् ॥

इति प्रभासखण्डे ।

अत्रिः—

हुङ्कारेणापि यो ब्रूयात् हस्ताद्वापि गुणान्वदेत् ।
भूतलाच्चोद्धरेत् पात्रं भुञ्जेद्धस्तेन वा पिबन् ॥
प्रौढपादो बहिः कक्षौ बहिर्जानुकरोऽथवा ।
अङ्गुष्ठेन विनाश्नाति मुखशब्देन वा पुनः ॥
पीत्वाऽवशिष्टतोयानि पुनरुद्धृत्य वा पिबेत् ।
खादितार्धान् पुनः खादेत् मोदकानि फलानि वा ॥
मुखेन वा धमेदन्नं निष्ठीवेद्भाजनेऽपि वा ।
इत्थमश्नन् द्विजः श्राद्धं हत्वा गच्छत्यधोगतिम् ॥ इति ।

वायुपुराणेऽपि—

श्राद्धे नियुक्ता ये विप्रा दम्भं क्रोधं च चापलम् ।
अन्योन्यस्पर्शनं कामाद्वर्जयेयुर्मदं तथा ॥ इति ।

शङ्खः—

श्राद्धे नियुक्तान् भुञ्जानान् न पृच्छेल्लवणादिषु ।
उच्छिष्टाः पितरो यान्ति पृच्छतो नात्र संशयः ॥
दातुः पतति बाहुर्वै जिह्वा भोक्तुस्तु भिद्यते ।

इत्याद्या बहवो नियमाः शास्त्रेषु कथिताः अतः भोक्तृभिः प्रयत्नेन पालनीयाः ।

अमन्त्रान्पठेत् । भूमौ तिलान्विकीर्य्य ब्राह्मणं सपिण्डारूपतया ध्यायेत् । 'ॐ उदीरताम्' इत्यादिमन्त्रान्, 'ॐ सहस्रशीर्षा' इत्यादि पुरुषसूक्तम्, 'ॐ आशुः शिशान' इत्यादिकमप्रतिरथमन्यानि च शतरुद्रियरुचिस्तवप्रभृतीनि पवित्राणि जपेत् । ततः 'ॐ नमस्तुभ्यं विरूपाक्ष' इत्यादि श्लोकमपि पठेत् । वीणादिभिः ब्राह्मणं हर्षयेत् । व्यञ्जनगुणानुत्कीर्तयन्मन्दं मन्दमुपनयन् ब्राह्मणं भोजयेत् । ततस्तं तृप्तं ज्ञात्वा उच्छिष्टसन्निधावास्तृतदक्षिणाग्रकुशत्रयां भूमिं प्रोक्ष्य मधुतिलघृतव्यञ्जनयुतमन्नं जलेनाप्लाव्य 'ॐ अनग्निदग्धा०' इति मन्त्रेण कुशोपरि अन्नं विकिरेत् । ततः सव्यं कृत्वाऽऽचम्य विष्णुं स्मरेत् । अपसव्यं कृत्वा 'इदं ते प्रत्यापोशानम्' इति जलगण्डूषं ब्राह्मणाय दत्त्वा 'ॐ स्वदितम्' इति पृच्छेत् । 'ॐ सुस्वदितम्' इति तेनोक्ते 'ॐ पिण्डमहं करिष्ये' इति पृच्छेत् । 'ॐ कुरुष्व' इत्यनुज्ञातो हस्तमात्रपरिमितां पिण्डिकां मृत्तिकामयीं निर्माय तन्मध्ये प्रादेशमितां रेखां वामेन पाणिना दर्भपिञ्जुलीमादाय हस्ताभ्यां गृहीत्वा तन्मूलेन दक्षिणाग्ररेखां कुर्यात् । दर्भपिञ्जुलीमुत्तरस्यां दिशि क्षिपेत् । 'ॐ ये रूपाणि' इति तत्राङ्गारभ्रमणं कृत्वाऽङ्गारं दक्षिणस्यां दिशि क्षिपेत् । रेखोपरि उपमूलसकृल्लूनान् कुशान् दक्षिणाग्रानास्तीर्य सव्यं कृत्वा 'ॐ देवताभ्य०' इति त्रिर्जपेत् । अपसव्यं कृत्वा जलतिलगन्धपुष्पाणि पुटके कृत्वा वामहस्तेन तमादाय दक्षिणहस्तेन प्रोटकादीन्यादाय—'ॐ अद्यामुकगोत्रे सपिण्डेऽमुकप्रेते चतुर्थदिनश्राद्धे पिण्डस्थानेऽत्रावनेनिक्ष्व ते मया दीयते तवोपतिष्ठताम्' इति कुशमध्येऽवनेजनं दद्यात् । ततो

मोटकादीन्यादाय पिण्डं चादाय—'ॐ अद्यामुकगोत्रे सपिण्डेऽमुकप्रेते चतुर्थदिनश्राद्धे एष पिण्डस्ते मया दीयते तवोपतिष्ठताम्' इति कुशमध्ये पिण्डं दद्यात् । तत आस्तृतकुशमूले करं प्रोञ्छय सव्यं कृत्वाऽऽचम्य हरिं स्मृत्वा 'ॐ अत्र सपिण्डे मादयस्व यथाभागमावृषायस्व' इति दक्षिणाभिमुखः पठेत् तत उदङ्मुखीभूय श्वासं नियम्य भास्वरमूर्त्तिं ध्यायन् 'ॐ अमीमदन्त सपिण्डे यथा भागमावृषायिष्ट' इति पठन् मुखं प्रत्यावर्त्तयेत् । मोटकादीन्यादाय वामहस्तेन अवनेजनपुटकं धृत्वा—'ॐ अद्यामुकगोत्रे सपिण्डेऽमुकप्रेते चतुर्थदिनश्राद्धेऽत्र प्रत्यवनेनिक्ष्व ते मया दीयते तवोपतिष्ठताम्' इति पिण्डोपरि प्रत्यवनेजनं दद्यात् । ततो नीवीं विस्रंस्य परिधाय सव्यं कृत्वाऽऽचामेत् । अपसव्यं कृत्वा वामेन पाणिनोद्धृतं सूत्रं दक्षिणेनादाय 'ॐ एतत्ते सपिण्डे वासः' इति पिण्डोपरि हस्ताभ्यां दद्यात् । मोटकादीन्यादाय—'ॐ अद्यामुकगोत्रे सपिण्डेऽमुकप्रेते चतुर्थदिनश्राद्धे पिण्डे एतद्वासस्ते मया दीयते तवोपतिष्ठताम्' इत्युत्सृजेत् । ततो गन्धपुष्पधूपदीपताम्बूलैः पिण्डमर्च्चयेत् । पिण्डशेषान्नं पिण्डसमीपे विकिरेत् । 'ॐ शिवा आपः सन्तु' इति आचान्तब्राह्मणकरे जलदानम् । 'ॐ सन्तु' इति प्रतिवचनम् । 'ॐ सौमनस्यमस्तु' इति पुष्पम् । 'ॐ अस्तु' इति प्रतिवचनम् । 'ॐ अक्षतं चारिष्टमस्तु' इति तण्डुलदानम् । 'ॐ अस्तु' इति प्रतिवचनम् । मोटकादीन्यादाय—'ॐ अद्यामुकगोत्रायाः सपिण्डाया अमुकप्रेतायाश्चतुर्थदिनश्राद्धे दत्तैतदन्नपानादिकमुपतिष्ठताम्' इत्यक्षय्योदकदानं ब्राह्मणकरे

दद्यात् । 'अक्षय्यमस्तु' 'ॐ उपतिष्ठताम्' इति प्रतिवचनम् । ततः सव्यं कृत्वा सुमनास्तन्मना दक्षिणां दिशं पश्यन् 'ॐ अघोरा सपिण्डाऽस्तु' इति पूर्वाग्रां जलधारां दद्यात् । 'ॐ अस्तु' इति प्रतिवचनम् । पूर्वाभिमुखो भूत्वा 'ॐ गोत्रं नो वर्द्धताम्' इत्याशिषं ब्राह्मणं याचेत् । 'ॐ वर्द्धताम्' इति तेनोक्ते 'ॐ दातारो नोऽभिवर्द्धन्ताम्' इत्यादिनाऽऽशीः प्रार्थनम् । 'ॐ सन्तु' इति प्रतिवचनम् । अपसव्यं कृत्वा पिण्डोपरि सपवित्रकुशानास्तीर्य दक्षिणाग्रान् । 'ॐ नमो वाचयिष्ये' इति ब्राह्मणं ब्रूयात् । 'ॐ वाच्यताम्' इत्युक्ते 'ॐ सपिण्डायै नमः उच्यताम्' इति वदेत् । 'ॐ अस्तु नमः' इत्युक्ते पुटकादिस्थितं जलं हस्ताभ्यामादाय 'ॐ ऊर्ज्जं वहन्तीः०' इति मन्त्रेण सपवित्रकुशोपरि दक्षिणाग्रां वारिधारां दद्यात् । ततो नम्रीभूय पिण्डमाघ्रायोत्थापयेत् । पिण्डाधारकुशानुल्मुकं च वह्नौ निक्षिपेत् । अर्घपात्रमुत्तानीकुर्यात् । ततो मोटकादिकं दक्षिणाद्रव्यं चादाय—'ॐ अद्यामुकगोत्रायाः सपिण्डाया अमुकप्रेतायाः कृतैतच्चतुर्थदिनश्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणां तुभ्यमहं सम्प्रददे इति दद्यात् । 'निरोङ्कारं स्वस्ति ब्रूहि' इति ब्राह्मणं वदेत् । 'स्वस्ति' इति ब्राह्मणेनोक्ते 'स्वस्त्यस्तु' इत्युक्त्वा ब्राह्मणदक्षिणहस्ताङ्गुष्ठं गृहीत्वोत्थापयेत् । तं गृहीत्वा जलपात्रं च गृहीत्वा निमन्त्रणस्थाने स्थापयेत् ।

ॐ आ मा व्वाजस्य प्रसवो जगम्यादेमे द्यावापृथिवी विश्वरूपे । आ मा गन्तां पितरा मातरा चा मा सोमोऽमृतत्वेन गम्यात् ॥

इति मन्त्रेण वारिधारया ब्राह्मणं त्रिर्वेष्टयेत्। प्रणम्याष्टौ-पादाननुव्रज्य प्रदक्षिणीकृत्य तं नमस्कुर्यात्। तत उपविश्य तत्रैव सव्यं कृत्वा 'ॐ देवताभ्यः०' इति त्रिर्जपेत्। 'ॐ नमो वाचयिष्ये' इति ब्राह्मणं ब्रूयात्। 'ॐ वाच्यताम्' इति तेनोक्ते। 'ॐ सपिण्डायै नमः उच्यताम्' इति वदेत्। ततः श्राद्धदेशमागत्य पाणिभ्यां दीपं निर्वाप्य सव्यं कृत्वा हस्तौ पादौ प्रक्षाल्याऽऽचम्य। ततः 'ॐ प्रमादात्' इत्यादि पठित्वा श्राद्धपूर्तिकामो विष्णुं स्मरेत्। पिण्डादिकं जले क्षिपेत्। उच्छिष्टापनयनं कुर्यात्। (१) (अपरपाकेन) दशप्रभृतिश्रोत्रियान्भोजयेत्। बन्धुभिर्मिलित्वा स्वयं भुञ्जीत। अनेनैव प्रकारेण पञ्चमदिने पञ्चमदिनश्राद्धं, (२) (नवमदिने नवमदिनश्राद्धम्, एकादशाहे एकादशाहदिनश्राद्धं कुर्यात्।) अत्र चतुर्थदिवसे विगोत्रो यदि श्राद्धकर्ता तदा तस्याशौचान्तद्वितीयदिनत्वात्तत्र शय्यादानकाञ्चनपुरुषदानदम्पतिपूजनवृषोत्सर्गकपिलादानानि कुर्यात्। सपिण्डो यदि श्राद्धकर्ता तदा तेनैकादशाहे अशौचान्तद्वितीयदिने शय्यादानादिकं वृषोत्सर्गश्च कर्तव्यो भवति। अनेनैव प्रकारेण प्रथममासमारभ्य द्वादशमासपर्यन्तं प्रतिमासशेषे क्षयाहे-प्रथममासिकद्वितीयमासिकतृतीयमासिकचतुर्थमासिकपञ्चममासिकषष्ठमासिकसप्तममासिकाऽष्टममासिकनवममासिकदशममासिकैकादशमासिकद्वादशमासिकानि कर्तव्यानि। अधिकमाससम्भवे त्रयोदशमासिकानि कर्तव्यानि। अस्मिन्ब्रह्मपुराणीयकल्पे मासिकानामपकृष्यकरणं न भवति। प्रमाणाभावादिति।

इति श्राद्धविवेके मध्यमक्रियापरिच्छेदस्तृतीयः॥ ३॥

(१) कंसान्तर्गतं नास्ति क०। (२) कंसान्तर्गतं नास्ति क०।

# अथ चतुर्थः परिच्छेदः ।

अथापात्रकैकोद्दिष्टश्राद्धप्रयोगः—

तत्र पूर्वदिने कृतनियमः श्राद्धदिने प्रातर्वस्त्रयुगेन कृत-स्नानः पञ्चगव्योपलेपनज्वलदङ्गारभ्रमणगौरमृत्तिकाच्छादनैः श्राद्धभूमिसंस्कारं कृत्वा वस्त्रादिना वेष्टयित्वा तिलगौरसर्षपैर-वकीर्य्य पित्रासनस्थानाद्वामभागे श्राद्धदेयवस्तून्यासाद्य कृतस्ना-नादिर्मध्याह्ने शुचिः शुक्लद्विवासाः पादौ प्रक्षाल्याऽऽचम्य श्राद्ध-देशमागच्छेत् । तत्र स्वयं पाकं कुर्यात् । सपिण्डस्त्रीद्वारा वा पाचयेत् । ततः पाके वृत्ते रक्षादीपं निधाय पुनराचम्य प्राङ्मुख उपविशेत् । अन्यकृते पाके 'सिद्धम्' इति पृष्ट्वा 'ॐ अपवित्रः पवित्रो वा' इत्यादि 'ॐ पुण्डरीकाक्षः पुनातु' इति पठित्वा कुशत्रयजलैः श्राद्धीयवस्तून्यभिषिञ्चेत् । ततः कुशत्रयातिलज-लान्यादाय—'ॐ अद्यामुकमासीयामुकपक्षीयामुकतिथौ अमुक-गोत्रस्य पितुरमुकशर्मणः सांवत्सरिकैकोद्दिष्टश्राद्धमहं करिष्य' इति सङ्कल्पं कुर्यात् । ततो गायत्रीं त्रिर्जपित्वा 'ॐ देवताभ्यः' इत्यादि त्रिर्जपेत् । ततोऽपसव्यं कृत्वा दक्षिणाभिमुखः पाति-तवामजानुः मोटकादीन्यादाय—'ॐ अद्यामुकगोत्र पितरमुक-शर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धे इदमासनं ते स्वधा' इति पूर्वो-पकल्पितं मोटकरूपमासनं तिलजलप्रोक्षितं दक्षिणाग्रं पितृतीर्थे-नोत्सृजेत् । 'ॐ अपहता' इत्यादिना भोजनपात्रे तिलान्वि-कीर्य्य 'ॐ आयन्तु नः' इत्यादि जपेत् । ततोऽर्घकरणम् । पुट-कादौ दक्षिणाग्रं पवित्रं धृत्वा 'ॐ शन्नो देवीः' इति जलं तत्र प्रक्षिप्य 'ॐ तिलोऽसि' इति तिलान्प्रक्षिप्य गन्धपुष्पे तूष्णीं

क्षिपेत् । ततोऽर्घपात्रं वामहस्ते कृत्वा भोजनपात्रे पवित्रमुत्तराग्रं धृत्वा तदुपरि उदकान्तरं दत्त्वा 'ॐ या दिव्या०' इति पठित्वा 'ॐ अद्यामुकगोत्र पितरमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धे एष ते हस्तार्घः स्वधा' इति पवित्रोपरि जलं यथापातितमेवमुत्सृजेत् । ततः पवित्रयुतं तदर्घपात्रमवशिष्टजलयुतमेवासनवामभागे 'ॐ पित्रे स्थानमसि' इति न्युब्जीकुर्यात् । दक्षिणादानपर्यन्तं तन्नोद्धरेत् न चालयेत् । ततो मोटकतिलजलान्यादाय—'ॐ अद्यामुकगोत्र पितरमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धे एतानि गन्धपुष्पधूपदीपताम्बूलयज्ञोपवीतवासांसि ते स्वधा' इति गन्धादीन्दद्यात् । ततो जलेन भोजनपात्रासनयोश्चतुर्दिशं मण्डलं कृत्वा सव्यञ्जनं सघृततिलजलमन्नं किञ्चिदग्रभागमुद्धृत्य मोटकादिना 'ॐ इदमन्नमेतत्भूस्वामिपितृभ्यो नमः' इति भूस्वामिनेऽन्नं दद्यात् । ततः सिद्धमुष्णमन्नं रजतादिपात्रस्थं कराभ्यामादाय पितरं ध्यायन्मन्दं मन्दं परिवेषणं कुर्यात् । ततः पुरुषाहारक्षममन्नं परिविष्य यथासम्भवं व्यञ्जनमन्नं जलं घृतं च पात्रान्तरस्थं तत्रोपनीय अन्नं मधुनाभिधार्य 'ॐ मधुव्वाता' इत्यादि त्र्यृचं, 'ॐ मधु मधु मधु' इति च पठित्वा पात्रमालभेत् । तत्र सव्येन हस्तेन पात्रं पश्चिमभागे स्पृशन् तदुपरिगतदक्षिणहस्तेनाधोमुखेन पूर्वभागे पात्रं स्पृशन् 'ॐ पृथिवी ते पात्रम्' इत्यादि, 'ॐ इदं विष्णुः' इत्यादि, 'ॐ कृष्णकव्यमिदं रक्ष मदीयम्' इति पठित्वा वामेन पाणिना पात्रं स्पृशन्नेव दक्षिणं पाणिमुद्धृत्य 'ॐ इदमन्नम्' इत्यन्ने । 'ॐ इमा आपः' 'ॐ इदमाज्यम्' 'ॐ इदं हविः' इति पुनरन्ने । अन्ने, जले, घृते, पुनरन्ने चाङ्गुष्ठं निक्षिप्य

'ॐ अपहता' इत्यादिनाऽन्नोपरि तिलान्विकीर्य्य मोटकातिलजलान्यादाय—'ॐ अद्यामुकगोत्र पितरमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धे एतत्तेऽन्नं सोपकरणं स्वधा' इत्युत्सृजेत् । ततो वामहस्तमप्युद्धृत्य 'ॐ अन्नहीनम्' इत्यादि पठित्वा गायत्रीं त्रिर्जपेत् । कुशेषूपविश्य 'ॐ मधुव्वाता' इत्यादि जपेत् । ततः 'ॐ कृणुष्व पाजः' इत्याद्या रक्षोघ्नीर्ऋचो जपित्वा भूमौ तिलान्विकीर्य पितरं ध्यात्वा 'ॐ उदीरताम्' इत्यादिपितृमन्त्रान्, 'ॐ सहस्रशीर्षा' इत्यादिपुरुषसूक्तम्, 'ॐ आशुः शिशान' इत्यादिकमप्रतिरथं च जपेत् । यथाशक्त्यन्यान्यपि पवित्राणि जपेत् । (१) रुचिस्तवादीनि च ।

ॐ नमस्तुभ्यं विरूपाक्ष नमस्तेऽनेकचक्षुषे ।
नमः पिनाकहस्ताय वज्रहस्ताय वै नमः ॥

---

(१) अथ रुचिस्तवप्रारम्भः—

ब्रह्मा चाह रुचिं विप्रं श्रुत्वा तस्याभिवाञ्छितम् ।
प्रजापतिस्त्वं भविता स्रष्टव्या भवता प्रजाः ॥
सृष्ट्वा प्रजाः सुतान् विप्र समुत्पाद्य क्रियास्तथा ।
कृताकृताधिकारस्त्वं ततः सिद्धिमवाप्स्यसि ॥
स त्वं यथोक्तं पितृभिः कुरु दारोपसंग्रहम् ।
कामं चेममनुध्याय कुरु तत् पितृपूजनम् ॥
एवं च तुष्टाः पितरः प्रदास्यन्ति तवेप्सितम् ।
पत्नीं सुतांश्च सन्तुष्टाः किं न दद्युः पितामहाः ॥

मार्कण्डेय उवाच ।

इत्यृषेर्वचनं श्रुत्वा ब्रह्मणोऽव्यक्तजन्मनः ।
नद्या विविक्ते पुलिने चकार पितृतर्पणम् ॥
तुष्टाव च पितॄन् विप्रस्तवैरेभिरथाऽऽदृतः ।
एकाग्रप्रयतो भूत्वा भक्तिनम्रात्मको रुचिः ॥

रुचिरुवाच ।

नमस्येऽहं पितॄन् भक्त्या ये वसन्त्यधिदेवताः ।
देवैरपि हि तर्प्यन्ते ये श्राद्धेषु स्वधोत्तरैः ॥
नमस्येऽहं पितॄन्स्वर्गे ये तर्प्यन्ते महर्षिभिः ।
श्राद्धैर्मनोमयैर्भक्त्या भुक्तिमुक्तिमभीप्सुभिः ॥
नमस्येऽहं पितॄन् स्वर्ग्यान् ते च सन्तर्पयन्ति तान् ।
श्राद्धेषु दिव्यैः सकलैरुपहारैरनुत्तमैः ॥
नमस्येऽहं पितॄन् भक्त्या येऽर्च्यन्ते गुह्यकैर्दिवि ।
तन्मयत्वेन वाञ्छद्भिर्ऋद्धिमात्यन्तिकीं शुभाम् ॥
नमस्येऽहं पितॄन् मर्त्यैरर्च्यन्ते भुवि ये सदा ।
श्राद्धेषु श्रद्धयाभीष्टलोकपुष्टिप्रदायिनः ॥
नमस्येऽहं पितॄन् भक्त्याऽभ्यर्च्यन्ते भुवि ये सदा ।
धन्यैः श्राद्धैस्तथाहारैस्तपोनिर्धूतकिल्बिषैः ॥
नमस्येऽहं पितॄन् विप्रैर्नैष्ठिकव्रतचारिभिः ।
ये संयतात्मभिर्नित्यं सन्तर्प्यन्ते समाधिभिः ॥
नमस्येऽहं पितॄन् श्राद्धे राजन्यास्तर्पयन्तियान् ।
कव्यैरशेषैर्विधिवत् लोकद्वयफलप्रदान् ॥
नमस्येऽहं पितॄन् वैश्यैरर्च्यन्ते भुवि ये सदा ।
स्वकर्मनिरतैर्नित्यं पुष्पधूपान्नवारिभिः ॥
नमस्येऽहं पितॄन् श्राद्धे ये शूद्रैरपि भक्तितः ।
सन्तर्प्यन्ते जगत्यत्र नाम्नाख्याताः सुकालिनः ॥
नमस्येऽहं पितॄन् श्राद्धे पाताले ये महासुरैः ।
सन्तर्प्यन्ते सदाहारैस्त्यक्तदम्भमदैः सदा ॥
नमस्येऽहं पितॄन् श्राद्धे ह्यर्च्यन्ते ये रसातले ।
भोगैरशेषैर्विविधैर्नागैः कामानभीप्सुभिः ॥
नमस्येऽहं पितॄन् श्राद्धे सर्पैः सन्तर्पिताःसदा ।
स्तुत्वैवं विविधैर्मन्त्रैर्भोगसम्पत्समन्वितैः ॥

पितॄन् नमस्ये निवसन्ति साक्षात् ये देवलोकेषु महीतले वा ।

तथान्तरिक्षे च सुरादिपूज्यास्ते सम्प्रतीच्छन्तु मयोपनीतम् ।
पितॄन् नमस्ये परमाणुभूता ये वै विमानेषु वसन्त्यमूर्ताः ।
यजन्ति यानस्तमलामनोभिर्योगीश्वराः क्लेशविमुक्तिहेतोः ॥
पितॄन् नमस्ये दिवि ये च मूर्ताः स्वधाभुजः काम्यफलाभिसन्धौ ।
प्रदानशक्ताः सकलेप्सितानां विमुक्तिदा येऽनभिसंहितेषु ॥
तृप्यन्तु तस्मिन् पितरः समस्ता इच्छावतां ये प्रदिशन्ति कामान् ।
सुरत्वमिन्द्रत्वमनोधिकत्वं वस्वात्मजान् दमामबलागृहाणि ॥
सूर्यस्य ये रश्मिषु चन्द्रबिम्बे शुक्ले विमाने च सदा वसन्ति ।
तृप्यन्तु तेऽस्मिन् पितरोऽन्नतोयैर्गन्धादिना तुष्टिमतो व्रजन्तु ॥
येषां हुतेऽग्नौ हविषापि तृप्तिर्ये भुञ्जते विप्रशरीरसंस्थाः ।
ये पिण्डदानेन मुदं प्रयान्ति तृप्यन्तु तेऽस्मिन् पितरोऽन्नतोयैः ॥
ये खड्गमांसेन सुरैरभीष्टैः कृष्णैस्तिलैर्दैत्यमहोरगैश्च ।
कालेन शाकेन महर्षिवर्यैः सम्प्रीणितास्तेमुदमत्र यान्तु ॥
कव्यान्यशेषाणि च यान्यभीष्टान्यतीव तेषाममरार्चितानाम् ।
तेषां तु सान्निध्यमिहास्तु पुष्पगन्धाम्बुभोज्येषु मयाऽऽहृतेषु ॥
दिने दिने ये प्रतिगृह्णतेऽन्नं मासानुभोज्या भुवि येऽष्टकासु ।
ये वत्सरान्तेऽभ्युदयेषु पूज्याः प्रयान्तु ते मे पितरोऽद्य तृप्तिम् ॥
पूज्या द्विजानां कुमुदेन्दुभासो ये क्षत्रियाणां च नवार्कवर्णाः ।
तथा विशां येह्यनलावभासा नीलीनिभाः शूद्रजनस्य ये च ॥
तस्मिन्समस्ता मम पुष्पगन्धधूपान्नतोयादिनिवेदनेन ।
तथाग्निहोमेन च यान्तु तृप्तिं सदा पितृभ्यः प्रणतोऽस्मि तेभ्यः
ये देवपूर्वाण्यपि तृप्तिहेतोरश्नन्ति कव्यानि शुभाहृतानि ।
तृप्तास्तु ये भूतिसृजो भवन्ति तृप्यन्तु तेऽस्मिन् प्रणतोऽस्मि तेभ्यः ॥
रक्षांसि भूतान्यसुरास्तथोग्रान् निःसारयन्तस्त्वशिवं प्रजानाम् ।
आद्याः सुराणाममरैश्च पूज्याः तृप्यन्तु तेऽत्र प्रणतोऽस्मि तेभ्यः ॥

अग्निष्वात्ताः बर्हिषद आज्यपाः सोमपास्तथा ।
व्रजन्तु तृप्तिं श्राद्धेऽस्मिन् पितरस्तर्पिता मया ॥
अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दिशम् ।

तथा बर्हिषदः पान्तु याम्यां ये पितरस्तथा ॥
प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः ।
रक्षोभूतपिशाचेभ्यः तथैवासुरदोषतः।
सर्वतश्चाधिपस्तेषां यमो रक्षां करोतु मे ।
विश्वो विश्वभुगाराध्यो धन्यो धर्मः सनातनः ॥
भूतिदो भूतिकृत् भूतिः पितॄणां ये गणा नव ।
कल्याणं कल्यतां कर्ता कल्यः कल्यतराश्रयः ॥
कल्यताहेतुरनघः षडित्येते गणाः स्मृताः ।
वरो वरेण्यो वरदः तुष्टिदः पुष्टिदस्तथा ॥
विश्वपाता तथा धाता सप्त चैते तथा गणाः ।
महामहा महातेजा मतिमांश्च फलप्रदः ॥
गणाः पञ्च तथैवैते पितॄणां पापनाशनाः ।
सुखदो धनदश्चान्यो धर्मदोऽन्यश्च भूतिदः ॥
पितॄणां कथ्यते चैव तथा गणचतुष्टयम् ।
एकत्रिंशत् पितृगणा यैर्व्याप्तमखिलं जगत् ॥
ते मेऽत्र तुष्टाः तुष्यन्तु यच्छन्तु च सदा हितम् ।

मार्कण्डेय उवाच ।

एवं च स्तुवतस्तस्य तेजसां राशिरुत्थितः ।
प्रादुर्बभूव सहसा गगनव्याप्तिकारकः ॥
तं दृष्ट्वा सुमहत्तेजः समाच्छाद्य स्थितं जगत् ।
जानुभ्यामवनीं गत्वा रुचिस्तोत्रमिदं जगौ ।
मूर्तिभाजाममूर्तीनां पितणाममितौजसाम् ।
नमस्यामि सदा तेषां ध्यायिनां दिव्यचक्षुषाम् ॥
इन्द्रादीनां च नेतारो दक्षमारीचयोस्तथा ।
सप्तर्षीणां तथान्येषां तान्नमस्यामिकामदान् ॥
मन्वादीनां च नेतंश्च सूर्याचन्द्रमसोस्तथा।
तान्नमस्याम्यहं सर्वान् पितरश्चार्णवेषु च ॥
नक्षत्राणां ग्रहाणां च वाय्वग्निनभसां तथा ।

द्यावापृथिव्योश्च तथा नमस्यामि कृताञ्जलिः ॥
देवर्षीणां च नेतॄंश्च सर्वदेवनमस्कृतान् ।
अभयस्य सदा दातॄन् नमस्येऽहं कृताञ्जलिः ।
प्रजापतेः कश्यपाय सोमाय वरुणाय च ।
योगेश्वरेभ्यश्च तथा नमस्यामि कृताञ्जलिः ॥
नमो गणेभ्यः सप्तभ्यस्तथा लोकेषु सप्तसु ।
स्वयम्भुवे नमस्यामि ब्रह्मणे योगचक्षुषे ॥
यदाधाराः पितृगणा योगमूर्तिधरा हि ते ।
नमस्यामि ततः सोमं पितरं जगतामहम् ।
अग्निरूपांस्तथैवान्यान् नमस्यामि पितॄनहम् ।
अग्नीषोममयं विश्वं यत एतदशेषतः ॥
ये तु तेजोमयाश्चैते सोमसूर्याग्निमूर्तयः ।
जगत्स्वरूपिणश्चैव तथा ब्रह्मस्वरूपिणः ॥
तेभ्योऽखिलेभ्यो योगिभ्यः पितृभ्यो यतमानसः ।
नमो नमो नमस्ते मे प्रसीदन्तु स्वधाभुजः ॥

मार्कण्डेय उवाच ।

एवं स्तुता ततस्तेन तेजसो मुनिसत्तम् ।
निश्चक्रमुस्ते पितरो भासयन्तो दिशो दश ॥
निवेदितं च यत्तेन गन्धमाल्यानुलेपनम् ।
तद्भूषितानथ स तान् ददृशे पुरतः स्थितान् ॥
प्रणिपत्य पुनर्भक्त्या पुनरेव कृताञ्जलिः ।
नमस्तुभ्यं नमस्तुभ्यमित्याह पृथगादृतः ॥
ततः प्रसन्नाः पितरस्तमूचुर्मुनिसत्तम् ।
वरं वृणीष्वेति स तानुवाचानतकन्धरः ॥
साम्प्रतं सर्गकर्तृत्वमादिष्टं ब्रह्मणा मम ।
सोऽहं पत्नीमभीप्सामि धन्यां दिव्यां प्रजावतीम् ॥

पितर ऊचुः ।

अद्यैव सद्यः पत्नी ते भविष्यति मनोरमा ।

तस्यां च पुत्रो भविता रुचिरो मुनिसत्तमः ॥
मन्वन्तराधिपो धीमांस्तन्नाम्नैवोपलक्षितः ।
रुचे रौच्य इति ख्यातिं प्रयास्यति जगत्त्रये ॥
तस्यापि बहवः पुत्रा भविष्यन्ति महात्मनः ।
महाबला महावीर्याः पृथिवीपरिपालकाः ।
त्वं च प्रजापतिर्भूत्वा प्रजाः सृष्ट्वा चतुर्विधाः ।
क्षीणाधिकारो धर्मज्ञः ततः सिद्धिमवाप्स्यसि ॥
स्तोत्रेणानेन हि रुचे योऽस्मांस्तोष्यति भक्तितः ।
तस्य तुष्टा वयं भोगान् दास्यामो ज्ञानमुत्तमम् ॥
शरीरारोग्यमैश्वर्यं पुत्रपौत्रादिकं तथा ।
वाक्शुद्धिः सततं स्वव्याः स्तोत्रेणानेन यत्नतः ॥
श्राद्धे च य इमं भक्त्या अस्मत्प्रीतिकरस्तवम् ।
पठिष्यति द्विजाग्र्याणां भुञ्जतां पुरतः स्थितः ॥
स्तोत्रश्रवणसम्प्रीत्या सन्निधाने परे कृते ।
अस्माकमक्षयं श्राद्धं तद्भविष्यत्यसंशयः ॥
यद्यप्यश्रोत्रियं श्राद्धं यद्यप्युपहतं भवेत् ।
अन्यायोपात्तवित्तेन यदि वा कृतमन्यथा ॥
अश्राद्धार्हैरुपहतैरुपहारैस्तथा कृतम् ।
अकालेऽप्यथवादेशे विधिहीनमथापि वा ॥
अश्रद्दधानैः पुरुषैर्दम्भमाश्रित्य यत् कृतम् ।
अस्माकं जायते तृप्तिस्तथाप्येतदुदीरणात् ॥
यत्रैतत्पठ्यते श्राद्धे स्तोत्रमस्मत्सुखावहम् ।
अस्माकं जायते तृप्तिस्तत्र द्वादशवार्षिकी ॥
हेमन्ते द्वादशाब्दानि तृप्तिमेतत् प्रयच्छति ।
शिशिरे द्विगुणाब्दानि तृप्तिं स्तोत्रमिदं श्रुतम् ॥
वसन्ते षोडशसमास्तृप्तये श्राद्धकर्मणि ।
ग्रीष्मे च षोडशैवैतत् पठितं तृप्तिकारकम् ॥
विकलेऽपि कृते श्राद्धे स्तोत्रेणानेन शोधिते ।

इति पठित्वा उच्छिष्टसमीपे दक्षिणाग्रं कुशत्रयमास्तीर्य्य जलेन सिक्त्वा किंचिदन्नं सघृततिलजलसिक्तमादाय 'ॐ अनग्निदग्धा ये जीवा' इत्यादिमन्त्रस्थफलमुद्दिश्य कुशोपरि अन्नं विकिरेत्। ततः सव्यं कृत्वाचम्य हरिं स्मृत्वा गायत्रीं, 'ॐ मधुव्वाता' इत्यादिकं, 'ॐ मधु मधु मधु' इति च जपेत् । ततोऽपसव्यं कृत्वा हस्तमात्रचतुरस्रचतुरङ्गुलोच्छ्रितदक्षिणप्लववपिण्डिकायां आदेशमात्रं परिमाय दर्भपिञ्जुलया दक्षिणाङ्गुष्ठतर्जनीधृतमूलया वामहस्ताङ्गुष्ठतर्जनीधृतोपरिभागया 'ॐ अपहताऽअसुरा रक्षा-ꣳसिव्वेदिषदः' इति प्रादेशमात्रमुल्लिख्य दर्भपिञ्जुलीमुत्तरस्यां दिशि त्यजेत्। 'ॐ ये रूपाणि' इत्यादिनाङ्गारं भ्रामयित्वा अ-ङ्गारं तद्दक्षिणस्यां दिशि क्षिपेत् । ततस्तत्र छिन्नमूलकुशत्रय-मास्तीर्य सव्यं कृत्वा 'ॐ देवताभ्यः' इति त्रिर्जपेत् । ततोऽ-पसव्यं कृत्वा तिलजलगन्धपुष्पाणि पुटके कृत्वा पुटकं वामह-स्ते धृत्वा मोटकतिलजलान्यादाय—'ॐ अद्यामुकगोत्र पितर-मुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धपिण्डस्थानेऽत्रावनेनिक्ष्व ते स्वधा' इति छिन्नमूलकुशोपरि अवनेजनं दद्यात् । किंचिज्जलं

---

वर्षासु तृप्तिरस्माकमक्षया जायते रुचे ! ॥
शरत्कालेऽपि पठितं श्राद्धकाले प्रयच्छति ।
अस्माकमेतत् पुरुषैस्तृप्तिः पञ्चदशाब्दिकी ॥
यस्मिन् गृहेऽपि लिखितं एतत्तिष्ठति नित्यदा ।
सन्निधानं कृते श्राद्धे तत्रास्माकं भविष्यति ।
तस्मादेतत्त्वया श्राद्धे विप्राणां भुञ्जतां पुरः ।
श्रावणीयं महाभाग ! अस्माकं प्रीतिहेतुकम् ॥
इति मार्कण्डेयपुराणे रुचिस्तवः समाप्तः ।

पुटकेऽवशोषयेत्। ततः तिलजलव्यञ्जनघृतमिश्रैरन्नैः पिण्डं बिल्वोपमं निर्माय मधुघृताभ्यामभिघार्य्यमोटकातिलजलसहितं पिण्डमादाय सव्योपगृहीतदक्षिणहस्तेन—'ॐ अद्यामुकगोत्र पितरमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धे एष ते पिण्डः स्वधा' इति छिन्नमूलकुशोपरि पिण्डं दद्यात्। ततः कुशमूले तूष्णीं करं प्रोञ्छ्य सव्यं कृत्वा द्विराचामेत्। हरिं स्मृत्वाऽपसव्यं कृत्वा-दक्षिणाभिमुखः 'ॐ अत्र पितर्मादयस्व यथाभागमावृषायस्व' इति पठित्वा उत्तराभिमुखीभूय श्वासं नियम्य पितरं ध्यायन् पुनर्दक्षिणाभिमुखो भवन् 'ॐ अमीमदतपितायथाभागमावृषायिष्ट' इति पठेत्। ततः पूर्वदत्तावशिष्टजलयुतमेवावनेजनपात्रमादाय—'ॐ अद्यामुकगोत्र पितरमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धे पिण्डेऽत्र प्रत्यवनेनिक्ष्व ते स्वधा' इति पिण्डोपरि प्रत्यवनेजनं दद्यात्। ततो नीवीं विस्रस्य सव्येनाचम्याऽपसव्यं कृत्वा वामेन पाणिना सूत्रमादाय दक्षिणकरे कृत्वा—

ॐ नमस्ते पिता रसाय नमस्ते पितः शोषाय नमस्ते पितर्जीवाय नमस्ते पितः स्वधायै नमस्ते पितर्घोराय नमस्ते पितर्मन्यवे नमस्ते पितः पितर्नमस्ते गृहान्नः पितर्देहि सतस्ते पितर्देष्म

इति पठित्वा 'ॐ एतत्ते पितर्वासः' इति पिण्डोपरि (सूत्रं) दद्यात्। ततो मोटकतिलजलान्यादाय—'ॐ अद्यामुकगोत्र पितरमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धे पिण्डे एतत्ते वासः स्वधा' इति सूत्रमुत्सृजेत्। ततः पितरमुद्दिश्य पिण्डे तूष्णीं गन्धपुष्पधूपदीपताम्बूलानि दद्यात्। ततः 'ॐ शिवा आपः सन्तुः' इति जलम्, 'ॐ सौमनस्यमस्तु' इति पुष्पं, 'ॐ अक्षतं चारि-

ष्टमस्तु' इति तण्डुलान्भोजनपात्रे क्षिपेत्। ततश्च मोटकतिलजला न्यादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुकशर्मणः सांवत्सरिकै कोद्दिष्टश्राद्धे दत्तैतदन्नपानादिक ( मक्षय्य ) मुपतिष्ठताम्' इत्य क्षय्योदकं दद्यात् । ततः सव्यं कृत्वा दक्षिणाभिमुखः 'ॐ अ घोराःपितास्तु' इति पिण्डोपरि पूर्वाग्रां जलधारां दद्यात् । ततः पूर्वाभिमुखः कृताञ्जलिः सुमनाः—

ॐ गोत्रं नो वर्द्धतां दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च ।
श्रद्धा च नो माव्यगमद्बहुदेयं च नोऽस्तु ॥
अन्नं च नो बहु भवेदतिथींश्च लभेमहि ।
याचितारश्च नः सन्तु मा च याचिष्म कञ्चन ॥

'एताः सत्या आशिषः सन्तु' इत्याशीः प्रार्थनं कृत्वाऽप- सव्यं कृत्वा सपवित्रकुशत्रयं दक्षिणाग्रं पिण्डोपरि धृत्वा 'ॐ ऊर्जं वहन्तीः०' इति मन्त्रेण कुशोपरि दक्षिणाग्रां जलधारां दद्यात् । ततो नम्रीभूय पिण्डमाघ्रायोत्थापयेत् । पिण्डाधारकुशानुल्मुकं च वह्नौ क्षिपेत् । अर्घपात्रमुत्तानीकृत्य दक्षिणां दद्यात् । तद्यथा मोटकतिलजलान्यादाय रजतं च—'ॐ अद्या- मुकगोत्रस्य पितुरमुकशर्मणः कृतैतत्सांवत्सरिकैकोद्दिष्टश्राद्धप्र- तिष्ठार्थमिदं रजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे' इति दद्यात् । यद्युपस्थितं रजतं न भवति तदा 'रक्तिकामितं रजतं चन्द्रदैवतम्' इत्येवमादिवाक्यं प्रयोक्तव्यम् । 'इदं' पदं न प्रयोक्तव्यमिति विशेषः । ततः 'ॐ अभिरम्यताम्' इति विसर्जनम् । ततः सव्यं कृत्वा 'ॐ देवताभ्य०' इति त्रिः

ठेत् । ततोऽपसव्यं कृत्वा पाणिभ्यां दीपं निर्वापयेत् । ततो हस्तौ पादौ प्रक्षाल्य सव्यं कृत्वाऽऽचम्य (१)( ॐ ब्रह्मणे स्वाहा, ॐ प्रजापतये स्वाहा, ॐ गृह्याभ्यः स्वाहा, ॐ कश्यपाय स्वाहा, ॐ अनुमतये स्वाहा । ततो हुतशेषान्नेन बलिदानम् । ॐ पर्ज्जन्याय नमः, ॐ अद्भ्यो नमः, ॐ पृथिव्यै नमः उदकसंस्थम् । ॐ धात्रे नमः, ॐ विधात्रे नमः द्वारशाखयोः । ॐ वायवे नमः इति प्रतिदिशम् । ॐ प्राच्यै नमः, ॐ अवाच्यै नमः, ॐ प्रतीच्यै नमः, ॐ उदीच्यै नमः इति प्रतिदिशम् । ॐ ब्रह्मणे नमः, ॐ अन्तरिक्षाय०, ॐ सूर्य्याय० इति मध्ये । ॐ विश्वेभ्यो देवेभ्यो नमः, ॐ विश्वेभ्यो भूतेभ्यो नमः, ॐ उषसे नमः, ॐ भूतानां पतये नमः इत्युत्तरोत्तरम् । ततः प्राचीनावीती दक्षिणाभिमुखः पातितवामजानुः पितृतीर्थेन दक्षिणस्यां दिशि 'ॐ पितृभ्यः स्वधा नमः' इति दद्यात् । ततो बलिशेषान्नलिप्तपात्रं प्रक्षाल्य 'ॐ यक्ष्मैतत्ते निर्णेजनं नमः' इति वायव्यां दिशि दद्यात् ।

ॐ देवा मनुष्याः पशवो वयांसि सिद्धाः सयक्षोरगदैत्यसङ्घाः ।
प्रेताःपिशाचास्तरवः समस्ता ये चान्नमिच्छन्ति मया प्रदत्तम् ॥
पिपीलिकाः कीटपतङ्गकाद्या बुभुक्षिताः कर्म्मनिबन्धबद्धाः ।
प्रयान्तु ते तृप्तिमिदं मयान्नं तेभ्यो विसृष्टं सुखिनो भवन्तु ॥
येषां न माता न पिता न बन्धुर्नचान्नसिद्धिर्न तथान्नमस्ति ।
न तृप्तयेन्नं भुवि दत्तमेतत्तेषां तु तृप्तिर्मुदिताभवन्तु ॥

शङ्खः—

'सौरभेयय०' इति गोभ्यस्ततो 'द्वौ श्वानौ०' इति शुनाम्,

( १ ) कंसान्तर्गतं नास्ति 'ख०' पुस्तके ।

'ऐन्द्र०' इति वायसानां शनैर्निर्वर्तयेद् भुवि । ततो ब्राह्मणान्भोजयेत् । इति नैमित्तिकश्राद्धबलिदानम् । )

ॐ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥

इति पठित्वा श्राद्धसम्पूर्तिकामो विष्णुं स्मरेत् । श्राद्धीयवस्तूनि ब्राह्मणाय प्रतिपादयेत् । अम्भसि वा क्षिपेत् । ततः शेषं ज्ञातिभिः सह भुञ्जीत । एवमेव पितृव्यभ्रात्रादिश्राद्धे प्रयोगः । शस्त्रादिहतनिमित्तकमाश्विनकृष्णचतुर्दश्यामप्येकोद्दिष्टमेव कर्तव्यम् । तत्र सांवत्सरिकपदं परं न प्रयोक्तव्यमिति ।

अथ मातृश्राद्धप्रयोगः—तत्र शुक्लाम्बरधरः स्नातो मध्याह्ने सुसमावृतं पञ्चगव्योपलेपितं ज्वलदङ्गारशोधितं गौरमृत्तिकाच्छादितं यथाप्रदेशासादितश्राद्धीयद्रव्यं तदेव देशमागत्य पादौ प्रक्षाल्याऽऽचम्य सपिण्डस्त्रीद्वारा स्वयं वा पचेत् । ततः पादौ प्रक्षाल्याऽऽचम्य शुद्धासने उपविश्य दीपं प्रज्वाल्य ( आचम्य प्राङ्मुखः ) परकर्तृकपाकपक्षे 'सिद्धम्' इति पाचिकां पृष्ट्वा—

ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।
यः स्मरेत्पुण्डरीकाक्षं सबाह्याभ्यन्तरः शुचिः ॥

इति पठित्वा 'ॐ पुण्डरीकाक्षः पुनातु' इति कुशत्रयजलैः श्राद्धीयद्रव्याणि सिञ्चेत् । ततः कुशत्रयतिलजलान्यादाय—'ॐ अद्यामुकमासीयामुकपक्षीयामुकतिथावमुकगोत्राया मातुरमुकदेव्याः सांवत्सरिकैकोद्दिष्टश्राद्धमहं करिष्ये' इति सङ्कल्पं कुर्यात् । ततो गायत्रीं त्रिर्जपित्वा, 'ॐ देवताभ्यः०' त्रिर्जपेत् । ततोऽपसव्यं कृत्वा पातितवामजानुर्दक्षिणाभिमुखो मोटकति-

कजलान्यादाय—'ॐ अद्यामुकगोत्रे मातरमुकदेवि सांवत्सरिकै-कोद्दिष्टश्राद्धे इदमासनं ते स्वधा' इति मोटकरूपमासनं दाक्षिणाग्रं सतिलमुत्सृजेत् । ततः 'ॐ अपहता०' इत्यन्नपात्रे वामावर्तेन तिलान्विकीर्य 'ॐ आयन्तु नः' इत्यादि पठित्वा अर्घपात्रे दक्षिणाग्रं पवित्रं धृत्वा 'ॐ शन्नो देवीः०' इत्यर्घपात्रे जलं क्षिपेत् । 'ॐ तिलोऽसि०' इति तिलान् प्रक्षिप्य गन्धपुष्पे तूष्णीं क्षिपेत् । ततोऽर्घपात्रं वामहस्ते कृत्वा पवित्रं भोजनपात्रोपरि उत्तराग्रं धृत्वा तदुपरि किञ्चिदुदकान्तरं दत्त्वा 'ॐ या दिव्या' इत्यादि पठित्वा मोटकतिलजलान्यादाय—'ॐ अद्यामुकगोत्रे मातरमुकदेवि सांवत्सरिकैकोद्दिष्टश्राद्ध एष ते हस्तार्घः स्वधा' इत्यर्घं ददद्युत्सृजेत् । ततोऽवशिष्टजलसहितं पवित्रसहितं अर्घपात्रमासनवामभागे 'ॐ मात्रे स्थानमसि' इति न्युब्जीकुर्यात् । तच्च दक्षिणादानपर्यन्तं नोद्धरेत् न चालयेत् । ततो गन्धादिदानम्—'ॐ अद्यामुकगोत्रे मातरमुकदेवि सांवत्सरिकैकोद्दिष्टश्राद्धे एतानि गन्धपुष्पधूपदीपताम्बूलसिन्दूरवासांसि ते स्वधा' इति दद्यात् । ततो जलेनासनसहितभोजनपात्रस्य चतुर्दिशं चतुष्कोणं मण्डलं कृत्वा सव्यञ्जनं श्राद्धदेयान्नाग्रभागं तिलजलसहितं कुत्रचित् पुटाकादौ कृत्वा 'ॐइदमन्नमेतद्भूस्वामिपितृभ्यो नमः' इति मोटकादिना भूस्वामिनेऽन्नमुत्सृजेत् । ततः कराभ्यां ताम्रपात्रस्थमन्नं आदाय मातरं ध्यायन्भोजनपात्रे पुरुषाहारतृप्तिक्षममन्नं परिविष्य यथासम्भवं व्यञ्जनं घृतं पानीयं च पात्रान्तरेषूपनीय मधुनान्नमभिघारयेत् । 'ॐ मधुव्वाता' इत्यादि च जपेत् । ततः पाणिभ्यां न्युब्जाभ्यां व्यस्ताभ्यां पात्रं स्पृशन् 'ॐ पृथिवी ते

पात्रम्' इत्यादि, 'ॐ इदं विष्णुः' इत्यादि, 'ॐ कृष्ण कव्यम्' इत्यादि च पठेत् । ततो दक्षिणहस्तमुत्तानं तदङ्गुष्ठम् 'ॐ इदमन्नम्' इत्यन्ने, 'ॐ इमा आपः' इति जले, 'ॐ इदमाज्यम्' इति घृते, 'ॐ इदं हविः' इति पुनरन्ने निवेशयेत् । 'ॐ अपहता०' इति तिलान् प्रक्षिपेत् । ततो मोदकादीन्यादाय—'ॐ अद्यामुकगोत्रे मातरमुकदेवि सांवत्सरिकैकोद्दिष्टश्राद्धे इदमन्नं सोपकरणं ते स्वधा' इत्यन्नमुत्सृजेत् । ततः पात्रं त्यजेत् । 'ॐ अन्नहीनम्' इत्यादि पठित्वा गायत्रीं त्रिर्जपित्वा कुशेषूपविश्य 'ॐ मधुव्वाता०' इति जपेत् । 'ॐ कृणुष्वपाजः' इत्याद्या रक्षोघ्नीर्ऋचः जपेत् । तिलान्भूमौ विकीर्य मातरं ध्यात्वा 'ॐ उदीरतामवर' इत्यादि पितृमन्त्रान्, 'ॐ सहस्रशीर्षा' इत्यादिपुरुषसूक्तम्, 'आशुः शिशान' इत्यादिकमप्रतिरथम्, (१)अन्यानि च पवित्राणि जपेत् । तत उच्छिष्टसमीपे कुशत्रयमास्तीर्य जलेन प्रोक्ष्य सव्यञ्जनमन्नं सघृतं सतिलं जलप्रोक्षितमादाय—'अनग्निदग्धा' इत्यादि कुशोपरि अन्नं विकिरेत् । ततः सव्यं कृत्वाऽऽचम्य हरिं स्मृत्वा गायत्रीं, 'मधुव्वाता' इत्यादि, 'ॐ मधु मधु मधु' इति च जपेत् । अपसव्यं कृत्वा पिण्डस्थाने प्रादेशमात्रम् 'ॐ अपहताऽसुरा रक्षाꣳसि व्वेदिषदः' इति मन्त्रेण

---

(१) सप्तव्याधा दशार्णेषु मृगाः कालञ्जरे गिरौ ।
चक्रवाकाः सरो द्वीपे हंसाः सरसि मानसे ॥
तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः ।
प्रस्थिता दीर्घमध्वानं यूयं तेभ्योऽवसीदत ॥ इति ।

समग्रसप्तव्याधाख्यानपठनासमर्थस्तु तत्संग्रहरूपमिदं श्लोकद्वयं पठेदिति ।

दर्भपिञ्जुल्या उल्लिखेत्। दर्भपिञ्जुलीमैशान्यां क्षिपेत्। ततः 'ॐ ये रूपाणि०' इति मन्त्रेण रेखायामङ्गारं भ्रामयित्वा दक्षिणस्यां ( दिशि ) त्यजेत्। ततस्तत्र छिन्नमूलकुशानास्तीर्य्य सव्यं कृत्वा 'ॐ देवताभ्यः०' इति त्रिर्जपेत्। ततोऽपसव्यं कृत्वा पुटके जलतिलपुष्पगन्धान्कृत्वा मोटकतिलजलान्यादाय— 'ॐ अद्यामुकगोत्र मातरमुकदेवि सांवत्सरिकैकोद्दिष्टश्राद्धे पिण्डस्थानेऽत्रावने निक्ष्व ते स्वधा' इति छिन्नमूलकुशोपरि अवनेजनं दद्यात्। ततस्तिलजलघृतसहितान्नेन पिण्डं कृत्वा मधुघृताभ्यामभिघार्य्य मोटकतिलजलान्यादाय पिण्डं च—'ॐ अद्यामुकगोत्रे मातरमुकदेवि सांवत्सरिकैकोद्दिष्टश्राद्धे एष ते पिण्डः स्वधा' इति पिण्डं सव्योपरिगृहीतदक्षिणहस्तेन दद्यात्। ततः कुशमूले करं प्रोञ्छ्य सव्यं कृत्वा द्विराचम्य हरिं स्मृत्वा अपसव्यं कृत्वा दक्षिणाभिमुखः 'ॐ अत्र मातर्मादयस्व यथाभागमावृषायस्व' इति पठित्वा उदङ्मुखीभूय श्वासं धारयन् मातरं ध्यायन्परावर्तमानः 'ॐ अमीमदत् माता यथाभागमावृषायिष्ट' इति पठेत्। ततोऽवनेजनावशिष्टजलसहितं पुटकमादाय मोटकतिलजलान्यादाय—'ॐ अद्यामुकगोत्रे मातरमुकदेवि सांवत्सरिकैकोद्दिष्टश्राद्धपिण्डेऽत्र प्रत्यवने निक्ष्व ते स्वधा' इति प्रत्यवनेजनं दद्यात्। ततो नीवीं विस्रंस्य सव्यं कृत्वाऽऽचम्य अपसव्यं कृत्वा वामेन पाणिना धृतं सूत्रं दक्षिणेनादाय—

ॐ नमस्ते माता रसाय नमस्ते मातः शोषाय नमस्ते मातर्जीवाय नमस्ते मातः स्वधायै नमस्ते मातर्घोराय नमस्ते मातर्मन्यवे नमस्ते मातर्मातर्नमस्ते गृहान्नो मातर्देहि सतस्ते मातर्देष्म॥

इति पठित्वा 'एतत्ते मातर्वासः' इति मन्त्रेण पिण्डोपरि सूत्रं धृत्वा मोटकतिलजलान्यादाय—'ॐ अद्यामुकगोत्रे मातरमुकदेवि सांवत्सरिकैकोद्दिष्टश्राद्धपिण्ड एतत्ते वासः स्वधा' इति सूत्रमुत्सृजेत्। ततः पिण्डे गन्धपुष्पधूपदीपताम्बूलानि तूष्णीमेव। 'ॐ शिवा आपः सन्तु' इति जलम्, 'ॐ सौमनस्यमस्तु' इति पुष्पम्, 'ॐ अक्षतं चारिष्टमस्तु' इति तण्डुलान्भोजनपात्रे क्षिपेत्। ततो मोटकतिलजलान्यादाय—'ॐ अद्यामुकगोत्राया मातुरमुकदेव्याः सांवत्सरिकैकोद्दिष्टश्राद्धे दत्तैतदन्नपानादिकमुपतिष्ठताम्' इत्यक्षय्योदकमुत्सृजेत्। ततः सव्यं कृत्वा दक्षिणाभिमुखः 'ॐ अघोरा माताऽस्तु' इति पिण्डोपरि पूर्वाग्रां जलधारां दद्यात्। ततः पूर्वाभिमुखः कृताञ्जलिः—

ॐ गोत्रं नो वर्द्धतां दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च।

श्रद्धा च नो मा व्यगमद्बहुदेयं च नोऽस्तु॥

अन्नं च नो बहु भवेदतिथींश्च लभेमहि।

याचितारश्च नः सन्तु मा च याचिष्म कञ्चन॥

'एताः सत्या आशिषः सन्तु' इत्याशीः प्रार्थनं कुर्यात्। ततोऽपसव्यं कृत्वा सपवित्रकुशत्रयं पिण्डोपरि आस्तीर्य—

ॐ ऊर्ज्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम्।

स्वधास्थ तर्पयत मे मातरम्॥

इति कुशोपरि दक्षिणाग्रां जलधारां दद्यात्। ततो नम्रीभूय पिण्डमाघ्रायोत्थापयेत्। पिण्डाधारकुशानुल्मुकं च वह्नौ निक्षिप्यार्घपात्रमुत्तानीकृत्य दक्षिणां दद्यात्। ततो मोटकति-

लजलान्यादाय—'ॐ अद्यामुकगोत्राया मातुरमुकदेव्याः कृतैतत्सांवत्सरिकैकोद्दिष्टश्राद्धप्रतिष्ठार्थं रजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे' इति यथावैभवं दद्यात्। 'ॐ अभिरम्यताम्' इति विसर्ज्जनम्। ततः सव्यं कृत्वा 'ॐ देवताभ्य०' इति त्रिर्जपेत्। ततोऽपसव्यं कृत्वा हस्ताभ्यां दीपं निर्वाप्य हस्तौ पादौ प्रक्षाल्य सव्येनाचम्य 'ॐ प्रमादात्०' इत्युक्त्वा श्राद्धसम्पूर्तिकामो विष्णुं स्मरेत्। ततः श्राद्धीयवस्तूनि ब्राह्मणाय प्रतिपादयेत्, जले वा क्षिपेत्। तत इष्टैः सह शेषं भुञ्जीत। एवं पत्न्यादिश्राद्धसम्बन्धनाम्नः उल्लेखे विशेषः। शस्त्रादिहतनिमित्तकेऽपि एकोद्दिष्ट एष एव प्रयोगः 'सांवत्सरिक' पदं तत्र न प्रयोक्तव्यम्।

तद्यथा—'अद्याश्विनकृष्णचतुर्दश्यां तिथावमुकगोत्राया मातुरमुकदेव्या एकोद्दिष्टश्राद्धमहं करिष्ये' इति सङ्कल्पं कुर्यात्। 'ॐ अद्यामुकगोत्रे मातरमुकदेवि एकोद्दिष्टश्राद्धे इदमासनं ते स्वधा' इत्येवमाद्युत्सर्गवाक्यम्। इत्येकोद्दिष्ट (श्राद्ध) प्रयोगः।

अथ स्त्रीकर्तृकश्राद्धप्रयोगः। तत्र स्नाता शुक्लवस्त्रयुगधरा मध्याह्ने सुसमावृतं पञ्चगव्योपलेपितं ज्वलदङ्गारशोधितं गौरमृत्तिकयाच्छादितं, यथाप्रदेशासादितश्राद्धीयद्रव्यं ज्वालितदीपं विकीर्णतिलगौरसर्षपं श्राद्धदेशमागत्याऽऽचम्यासने प्राङ्मुखी उपविशेत्। पाचिकान्तरपक्षे 'सिद्धम्' इति पाचिकां पृच्छेत्। ततः 'अपवित्रः पवित्रो वा' इत्यादिना 'पुण्डरीकाक्षः पुनातु' इति कुशत्रयजलेन श्राद्धीयद्रव्याणि सिञ्चेत्। ततः कुशतिलजलान्यादाय—'नमो अद्यामुकगोत्रस्य पत्युरमुकशर्मणः सांवत्स-

रिकैकोद्दिष्टश्राद्धमहं करिष्ये' इति सङ्कल्पयेत् । ततः 'देवताभ्यः०' इति त्रिर्जपेत् । ततो दक्षिणाभिमुखी पातितवामजानुर्मोटकतिलजलान्यादाय—'नमो अद्यामुकगोत्र पतेऽमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धे इदमासनं ते नमः' इति पितृतीर्थेन मोटकरूपमासनमुत्सृजेत् । ततस्तूष्णीं भोजनपात्रे तिलान् प्रक्षिप्य अर्घपात्रे पवित्रधारणं जलतिलगन्धपुष्पाणां प्रक्षेपः ततोऽर्घपात्रं वामहस्ते कृत्वा पवित्रमुत्तराग्रं भोजनपात्रे धृत्वा तदुपरि किञ्चिदुदकान्तरं दत्त्वा, मोटकादीन्यादाय—'नमो अद्यामुकगोत्र पतेऽमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धे एष ते हस्तार्घो नमः' इत्यर्घ्यं पवित्रोपरि ददद्‌त्सृजेत् । ततोऽवशिष्टजलपवित्रसहितमर्घपात्रमासनवामभागे 'पत्ये स्थानमसि' इति न्युब्जीकुर्यात् । ततो गन्धादिदानम् । मोटकतिलजलान्यादाय—'नमो अद्यामुकगोत्र पतेऽमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धे एतानि गन्धपुष्पधूपदीपताम्बूलयज्ञोपवीतवासांसि ते नमः'। ततो जलेनासनसहितं भोजनपात्रं मण्डलेन वेष्टयेत् । श्राद्धीयान्नाग्रभागं सव्यञ्जनं सतिलजलं पुटकादौ कृत्वा मोटकादीन्यादाय—'इदमन्नमेतद्भूस्वामिपितृभ्यो नमः' इति भूस्वामिनेऽन्नं दद्यात् । ततस्ताम्रादिपात्रस्थितमन्नं कराभ्यामादाय पतिं ध्यायन्ती परिवेषयेत् । जलं घृतं व्यञ्जनं च पुटकान्तरस्थं तत्रोपनीय अन्ने मधु दत्वा 'मधु मधु मधु' इति जपेत् । तत उभाभ्यां व्यस्तहस्ताभ्यां भोजनपात्रमालभ्यान्नममृततया चिन्तयेत् । 'कृष्ण कव्यमिदं रक्ष मदीयम्' इति पठित्वा दक्षिणहस्तमुत्तोल्य तदङ्गुष्ठम् 'इदमन्नम्' 'इमा आपः' 'इदमाज्यम्' इत्यन्नजलघृतेषु निक्षिप्य 'इदं हविः' इति पुनरन्नेऽङ्गुष्ठं

निक्षिप्य अन्नोपरि तिलान्विकीर्य्य मोटकादीन्यादाय—'नमो अद्यामुकगोत्र पतेऽमुकशर्म्मन् सांवत्सरिकैकोद्दिष्टश्राद्धे इदमन्नं सोपकरणं ते नमः' इत्यन्नमुत्सृजेत् । ततो वामहस्तमुत्तोल्य 'अन्नहीनम्' इत्यादि पठित्वा भूमौ तिलान्विकीर्य्य दर्भेषूपविश्य नीलकण्ठस्तुतिरुचिस्तवादीनि पेठत् । अशक्तौ 'नमस्तुभ्यं विरूपाक्ष०' इति श्लोकं पठेत् । तत उच्छिष्टसन्निधावास्तृतकुशत्रयां भूमिं प्रोक्ष्य सतिलजलप्रोक्षितं सव्यञ्जनघृतममृतमन्नमादाय 'नमो अनग्निदग्धा०' इत्यादि पठित्वा कुशादिना (सह) विकिरेत् । तत आचम्य हरिं नत्वा दक्षिणमुखी पिण्डस्थाने प्रादेशमात्रं परिमाय करद्वयतर्ज्जन्यङ्गुष्ठधृतमूलया दर्भपिञ्जुल्या तद्रुल्लिख्य दर्भपिञ्जुलीमुत्तरतः क्षिपेत् । ततस्तत्र ज्वलदङ्गारं भ्रामयित्वा दक्षिणस्यां क्षिपेत् । ततस्तत्र छिन्नमूलकुशत्रयमास्तीर्य प्राङ्मुखी 'देवताभ्यः' इत्यादि त्रिः पठेत् । ततो दक्षिणामुखी पुटके तिलजलगन्धपुष्पाणि कृत्वा पाणिनादाय मोटकादीनि च—'नमो अद्यामुकगोत्र पतेऽमुकशर्म्मन् सांवत्सरिकैकोद्दिष्टश्राद्धपिण्डस्थानेऽत्रावने निक्ष्व ते नमः' इति कुशोपरि अवनेजनं दद्यात् । ततास्तिलजलव्यञ्जनमधुघृतयुतान्नेन पिण्डं निर्माय मधुघृताभ्यामभिघार्य्य मोटकादीनि चादाय—'नमो अद्यामुकगोत्र पतेऽमुकशर्म्मन् सांवत्सरिकैकोद्दिष्टश्राद्धे एष ते पिण्डो नमः' इत्यवनेजनकुशोपरि वामान्वारब्धदक्षिणपाणिना पिण्डं दद्यात् । ततो द्विराचम्य हरिं स्मृत्वा उत्तराभिमुखीभूय श्वासं नियम्य पतिं ध्यायन्ती दक्षिणामुखी भवेत् । ततो दत्तावशिष्टजलयुतमवनेजनपात्रं मोटकादीनि चादाय—'नमो अद्यामुकगोत्र पतेऽमुकश-

र्मन् सांवत्सरिकैकोद्दिष्टश्राद्धपिण्डेऽत्र प्रत्यवने निक्ष्व ते नमः' इति प्रत्यवनेजनं दद्यात्। ततो नीवीं विस्रंस्याचम्य दक्षिणामुखी वामेन पाणिना सूत्रमादाय दक्षिणेन पिण्डोपरि धृत्वा—'नमो अद्यामुकगोत्र पतेऽमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धपिण्डे एतत्ते वासो नमः' इति मोटकादिना सूत्रमुत्सृजेत्। ततः पिण्डे गन्धादिदानम्। ततः 'शिवा आपः सन्तु' इति जलम्, 'सौमनस्यमस्तु' इति पुष्पम्, 'अक्षतं चारिष्टमस्तु' इति तण्डुलान्भोजनपात्रे प्रक्षिप्य मोटकादीन्यादाय—'नमो अद्यामुकगोत्रस्य पत्युरमुकशर्मणः सांवत्सरिकैकोद्दिष्टश्राद्धे दत्तैतदन्नपानादिक-(मक्षय्य) मुपतिष्ठताम्' इत्यक्षय्योदकं दद्यात्। ततः पिण्डोपरि 'अघोरः पतिरस्तु' इति पूर्वाग्रां जलधारां दद्यात्। ततः प्राङ्मुखी कृताञ्जलिः 'गोत्रं नो वर्द्धताम्' इत्यादि पठित्वा 'एताः सत्या आशिषः सन्तु' इति प्रार्थयेत्। ततो दक्षिणामुखी पिण्डोपरि सपवित्रं कुशत्रयं दक्षिणाग्रमास्तीर्य तदुपरि दक्षिणाग्रां जलधारां दद्यात्। ततो नम्रीभूय पिण्डमाघ्रायोत्थापयेत्। पिंडाधारकुशानुल्मुकं च वह्नौ निक्षिपेत्। ततोऽर्घपात्रमुत्तानीकृत्य दक्षिणादानम्—'नमो अद्यामुकगोत्रस्य पत्युरमुकशर्म्मणः कृतैतत्सांवत्सरिकैकोद्दिष्टश्राद्धप्रतिष्ठार्थं रक्तिकामितं रजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे' इति दक्षिणां दद्यात्। ततोऽभिरम्यताम्' इति विसर्जनम्। ततः प्राङ्मुखी 'देवताभ्यः०' इति त्रिर्जपेत्। ततो दक्षिणामुखी हस्ताभ्यां दीपं निर्वापयेत्। ततो हस्तौ पादौ प्रक्षाल्याऽऽचम्य 'प्रमादात्' इति पठित्वा सम्पूर्णकामा विष्णुं स्मरेत्। श्राद्धीयवस्तूनि

ब्राह्मणाय प्रतिपादयेत्, अम्भसि वा क्षिपेत् । तत इष्टैः सह भोजनम् । एवमेव शस्त्रहतादिनिमित्तकमाश्विनकृष्णचतुर्दश्यां श्राद्धं कर्तव्यम् । 'सांवत्सरिकैकोद्दिष्ट' पदं तत्र न प्रयोक्तव्यम् । तद्यथा—'अद्य आश्विनकृष्णचतुर्दश्यां तिथौ अमुकगोत्रस्य पत्युरमुकशर्मणः एकोद्दिष्टश्राद्धमहं करिष्ये' इति सङ्कल्पं कुर्यात् । 'अद्यामुकगोत्र पते अमुकशर्मन्नेकोद्दिष्टश्राद्ध इदमासनं ते नमः' इत्येवमादिनाऽऽसनादिदानम् । एवमेव शूद्रकर्तृकैकोद्दिष्टश्राद्धप्रयोगः ।

अथापात्रकपार्वणश्राद्धप्रयोगः । अपराह्णे स्नातः शुक्लद्विवासाः शुचिराचम्य वेष्टितं श्राद्धदेशमागच्छेत् । ततः प्राङ्मुख उपविश्य सिद्धान्नसम्भवे 'सिद्धम्' इति पाचिकां पृष्ट्वा 'ॐ अपवित्रः' इत्यादि पठित्वा 'ॐ पुण्डरीकाक्षः पुनातु' इति कुशत्रयानीतजलैः श्राद्धवस्तूनि सिञ्चेत् । (१) रक्षार्थं दीपं निधाय गौरसर्षपैरवकीर्य—

ॐ नमो नमस्ते गोविन्द पुराण पुरुषोत्तम ।
इदं श्राद्धं हृषीकेश ! रक्ष त्वं सर्वतो दिशः ॥

ॐ प्राच्यै नमः, ॐ अवाच्यै नमः, ॐ प्रतीच्यै नमः ॐ उदीच्यै नमः । यवपुष्पैः 'ॐ भूम्यै नमः' इति भूमिं त्रिःसंपूज्य पादयोरधः कुशत्रयं दद्यात् । ततः कुशत्रयतिलजलैः सङ्कल्पं कुर्यात् । ॐ अद्यामुकमासीयामुकपक्षीयामुकतिथावमुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकशर्मणां तथाऽमुकगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकश-

---

( १ ) कन्सान्तर्गतं नास्ति क० ख० पुस्त०

र्मणां (अपात्रक) पार्वणश्राद्धमहं करिष्ये । ततो गायत्रीं त्रिर्जपित्वा 'ॐ देवताभ्यः' इति त्रिर्जपेत् । तत उत्तराभिमुखो दक्षिणोत्तरक्रमासादितकुशत्रयात्मकासनद्वये प्रथमं दक्षिणमासनं सयवमुत्सृजेत् । 'ॐ अद्यामुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकशर्मणां पार्वणश्राद्धसम्बन्धिनो विश्वेदेवा इदमासनं वो नमः' इति कुशत्रय ( यव ) जलैरुत्सृजेत् । ( एवम् ) 'ॐ अद्यामुकगोत्राणां मतामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्मणां पार्वणश्राद्धसम्बन्धिनो विश्वेदेवा इदमासनं वो नमः' इत्यपरमुत्सृजेत् । ततोऽपसव्यं कृत्वा पातितवामजानुर्दक्षिणाभिमुखो द्विगुणभुग्नकुशत्रयातिलजलान्यादाय, पूर्वपश्चिमक्रमासादितमोटकरूपाणि षडासनानि तिलजलप्रोक्षितानि प्रत्येकं पित्रादिभ्यः पश्चिमत आरभ्य उत्सृजेत् । तत्र क्रमः—'ॐ अद्यामुकगोत्र पितरमुकशर्मन् पार्वणश्राद्धे इदमासनं ते स्वधा' । एवं पितामहप्रपितामहयोः । 'ॐ अद्यामुकगोत्र मातामहामुकशर्मन् पार्वणश्राद्धे इदमासनं ते स्वधा' । एवं प्रमातामहवृद्धप्रमातामहयोर्दद्यात् । ततः सव्यं कृत्वा—'ॐ विश्वान्देवानहमावाहयिष्ये' इत्युक्त्वा—

ॐ विश्वे देवासऽआगत शृणुताम इमꣳहवम् ।
एदं बर्हिर्न्निषीदत ॥

इत्यनेन देवानावाह्य—'ॐ यवोऽसि यवयास्मद्द्वेषो यवयारातीः' इति यवान्विकीर्य—

'ॐ व्विश्वेदेवाः शृणुतेमꣳ हवम्मेयेऽअन्तरिक्षे यऽउपद्यविष्ठ

येऽअग्निजिह्वाऽउत वा यजत्राऽआसद्यास्मिन्बर्हिषिमादयध्वम् ॥ इति जपेत् ।

ॐ आगच्छन्तु महाभागा विश्वेदेवा महाबलाः ।
ये यत्र विहिता श्राद्धे सावधाना भवन्तु ते ॥

इति श्लोकं पठेत् । ततोऽपसव्यं कृत्वा दक्षिणाभिमुखः 'ॐ पितॄनहमावाहयिष्ये' इत्युक्त्वा—

ॐ उशन्तस्त्वा निधीम ह्युशन्तः समिधीमहि ।
उशन्नुशतऽआवह पितॄन् हविषे अत्तवे ॥

इत्यावाह्य 'ॐ अपहता असुरा रक्षाꣳसि वेदिषदः' इति मन्त्रेण तिलान् विकीर्य्य—

ॐ आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः ।
अस्मिन्यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान् ॥

इति जपेत् । ततः सव्यं कृत्वा देवार्घपात्रद्वये पवित्रे धृत्वा अपसव्येन पित्राद्यर्घपात्रेषु प्रत्येकं पवित्रं धृत्वा सव्येन देवार्घपात्रद्वये—

ॐ शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये ।
शंय्योरभिस्रवन्तु नः ॥

इति जलं प्रक्षिप्य अपसव्येन पित्राद्यर्घपात्रषट्सु अनेनैव क्रमेण जलं पितृतीर्थेन क्षिपेत् । ततः सव्यं कृत्वा 'ॐ यवोऽसि०' इति मन्त्रेण देवार्घपात्रद्वये प्रत्येकं यवान्प्रक्षिप्य अपसव्येन पित्राद्यर्घपात्रेषु प्रत्येकम्—

ॐ तिलोऽसि सोमदेवत्यो गोसवो देवनिर्मितः ।
प्रत्नमद्भिः पृक्तः स्वधया पितॄँल्लोकान्प्रीणाहि नः स्वाहा ॥

इति तिलान्प्रक्षिपेत् । ततः सव्येन देवार्घपात्रद्वये तूष्णी-मेव गन्धपुष्पे प्रक्षिप्य अपसव्येन पित्राद्यर्घपात्रेषु प्रक्षिपेत् । ततः सव्यं कृत्वा एकं देवार्घपात्रं वामहस्ते कृत्वा तत्स्थं पवित्रं देवभोजनपात्रे पूर्वाग्रं धृत्वा तदुपरि किञ्चिदुदकान्तरं दत्वा—

ॐ या दिव्या आपः पयसा सम्बभूवुर्याऽअन्तरिक्षाऽउत पार्थिवीर्याः ः

हिरण्यवर्णा यज्ञियास्ता नऽआपः शिवाः स ँ स्योनाः सुहवा भवन्तु ॥

इति पठित्वा यवकुशजलान्यादाय—'ॐ अद्यामुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकशर्मणां पार्वणश्राद्धसम्बन्धिनो विश्वेदेवा एष वो हस्तार्घो नमः' इत्यर्घं ददद्युत्सृजेत् । एव-मेव मातामहादिदेवेभ्योऽपि दद्यात् । ततोऽपसव्यं कृत्वा पित्र-र्घपात्रं वामहस्ते कृत्वा पितृभोजनपात्रे पवित्रं उत्तराग्रं धृत्वा तदुपरि किञ्चिदुदकान्तरं दत्वा 'ॐ या दिव्या' इत्यादि पठित्वा मोटकतिलजलान्यादाय—'ॐ अद्यामुकगोत्र पितरमुकशर्मन् पार्वणश्राद्धे एष ते हस्तार्घः स्वधा' इति अर्घं ददद्युत्सृजेत् । एवमेव पितामहादिपञ्चभ्योऽपि दद्यात् । ततः सव्यं कृत्वा पवि-त्रसहितमवशिष्टजलयुतं देवार्घपात्रद्वयं यथाक्रमं प्रत्येकं देवासन-दक्षिणपार्श्वे 'ॐ विश्वेभ्यो देवेभ्यः स्थानमसि' इत्युक्त्वा उत्ता-नमेव धारयेत् । अपसव्यं कृत्वा किञ्चित्प्रपितामहार्घपात्रस्थित-पवित्रादीनि पितामहार्घपात्रे निधाय तद्द्वयस्थितं पवित्रादि पित्र-र्घपात्रे निधाय पित्रर्घपात्रं पितामहार्घपात्रोपरि, तत्पात्रद्वयं प्रपि-तामहार्घपात्रोपरि धृत्वा तत्पात्रत्रिकं पित्रासनवामपार्श्वे 'ॐ

पितृभ्यः स्थानमसि' इति ( मिळितान्येव ) न्युब्जीकुर्यात् । एवमेव मातामहाद्यर्घपात्राणि मेळयित्वा मातामहवामपार्श्वे 'ॐ मातामहादिभ्यः स्थानमसि' इति न्युब्जीकुर्यात् । तथा स्थापितानि दक्षिणादानपर्यन्तं नोद्धरेत् न चाळयेत् । ततः सव्यं कृत्वा यवकुशजलैः—'ॐ अद्यामुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकशर्मणां पार्वणश्राद्धसम्बन्धिनो विश्वेदेवा एतानि गंधपुष्पधूपदीपताम्बूलयज्ञोपवीतवासांसि वो नमः' इति यथासम्भवमुत्सृजेत् । एवमेव मातामहादिविश्वेभ्यो देवेभ्यो दद्यात् । ततोऽपसव्यं कृत्वा मोटकतिलजलान्यादाय—'ॐ अद्यामुकगोत्र पितरमुकशर्मन् पार्वणश्राद्धे एतानि गन्धपुष्पधूपदीपताम्बूलयज्ञोपवीतवासांसि ते स्वधा' इति पित्रे गन्धादि दद्यात् । एवमेव पितामहादिपञ्चभ्योऽपि दद्यात् । ततो जलेन भोजनपात्रसहितमासनं वेष्टयित्वा मण्डलानि कुर्यात् । ततः श्राद्धदेयान्नाग्रभागमानीय सघृतं तरसव्येनैव ( प्राङ्मुखः ) पुटकादिस्थजले आहुतिद्वयं जुहुयात् । 'ॐ अग्नये कव्यवाहनाय स्वाहा' 'ॐ सोमाय पितृमते स्वाहा' । ततो तिलजलसहितं घृतयुतं सव्यञ्जनमन्नमपसव्येन 'ॐ इदमन्नमेतद्भूस्वामि पितृभ्यो नमः' इति दद्यात् । ततो हुतशेषमन्नं कञ्चित्किञ्चित्सव्येन देवपात्रद्वये, अपसव्येन पित्रादिपात्रेषु दत्वा पिण्डार्थं किञ्चिदवशेषयेत् । तत उत्कृष्टमन्नं सिद्धमामं वा पुरुषाहारक्षमं प्रत्येकं परिविष्य यथासंभवमुपकरणं जलं घृतं च तत्रोपनीय सव्येन देवयोः, अपसव्येन पित्रादिषु मध्वन्नोपरि दद्यात् ।

ततः । प्रत्येकं—

ॐ मधु व्वाताऽऋतायते मधु क्षरन्ति सिन्धवः ।
माध्वीर्नः सन्त्वोषधीः ॥
मधु नक्तमुतोषसो मधुमत्पार्थिवꣳ रजः ।
मधु द्यौरस्तु नः पिता ॥
मधुमान्नो व्वनस्पतिर्म्मधुमाꣳअस्तु सूर्यः ।
माध्वीर्ग्गावो भवन्तु नः ॥

'ॐ मधु मधु मधु' इति जपेत् । ततः सव्येन उत्तानपाणिभ्यां देवपात्रं स्पृष्ट्वा—

ॐ पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽअमृतेऽमृतं जुहोमि स्वाहा ॥

इदं व्विष्णुर्व्विचक्रमे त्रेधा निदधे पदम् ।
समूढमस्यपाꣳसुरे ॥

इति पठित्वा 'ॐ कृष्णहव्यमिदं रक्ष मदीयम्' 'ॐ इदमन्नम्' इत्यन्ने, 'ॐ इमा आपः' इति जले, 'ॐ इदमाज्यम्' इति घृते, 'ॐ इदं हविः' इति पुनरन्ने दक्षिणकराङ्गुष्ठमावेश्य 'ॐ यवोऽसि यवयास्मद्द्वेषो यवयारातीः' इति यवानन्ने प्रक्षिप्य—'ॐ अद्यामुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकशर्म्मणां पार्वणश्राद्धसम्बन्धिनो विश्वेदेवा एतद्वोऽन्नं सोपकरणं नमः' इति कुशत्रययवजलैरुत्सृजेत् । एवमेव मातामहादिदेवेभ्योऽपि दद्यात् । ततोऽपसव्यं कृत्वा दक्षिणाभिमुखः पातितवामजानुः पितृपात्रं न्युब्जाभ्यां व्यस्ताभ्यां पाणिभ्यां स्पृष्ट्वा 'ॐ पृथिवी ते पात्रम्' इत्यादि, 'ॐ इदं व्विष्णुर्व्विचक्रमे' इत्यादि च पठित्वा 'ॐ कृष्णकव्यमिदं रक्ष मदीयम्' इत्युक्त्वा 'ॐ इदमन्नम्'. 'ॐ

इमा आपः', 'ॐ इदमाज्यम्', 'ॐ इदं हविः' इत्यन्नादिषु अङ्गुष्ठमावेश्य 'ॐ अपहता०' इत्यन्नोपरि तिलान्विकीर्य्य मोटकतिलजलान्यादाय—ॐ अद्यामुकगोत्र पितरमुकशर्मन् पार्वणश्राद्धे एतत्तेऽन्नं सोपकरणं स्वधा' इति पित्रेऽन्नमुत्सृजेत् । एवमेव पितामहादिभ्योऽपि दद्यात् । यदा एकं पात्रं भवति तदा 'पृथिवी ते पात्रम्' इति मन्त्रः पुनर्न पठनीयः ।

ॐ अन्नहीनं क्रियाहीनं विधिहीनं तु यद्भवेत् ।
तत्सर्वमच्छिद्रमस्तु ॥ इति जपेत् ।

ततो गायत्रीं त्रिर्जपेत् । ततः कुशेषूपविश्य 'ॐ मधु व्वा०ता' इत्यादि ऋचं 'ॐ मधु मधु मधु' इति च जपित्वा, रक्षोघ्नीः 'कृणुष्वपाज' इत्याद्या ऋचः पठित्वा भूमिं तिलैर्विकिरेत् । 'ॐ उदीरतामवर' इत्यादीन्पितृमन्त्रान्, 'ॐ सहस्रशीर्षा' इत्यादि पुरुषसूक्तं 'ॐ आशुः शिशानः' इत्यादिकमप्रतिरथम्, अन्यानि च पवित्राणि जपेत् । पुराणेतिहासस्तोत्रादीनि च जपेत् । तत उच्छिष्टसन्निधावास्तृतकुशात्रयां भूमिं प्रोक्ष्य सर्वप्रकारकमन्नमुद्धृत्य सतिलमेकीकृत्य—

ॐ अनग्निदग्धा ये जीवा ये प्रदग्धाः कुले मम ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥

इति मन्त्रेण मन्त्रस्थं फलमुद्दिश्य विकिरेत् । ततः सव्यं कृत्वाऽऽचम्य हरिं स्मृत्वा गायत्रीं, 'ॐ मधु व्वाता' इत्यादि ऋचं, 'ॐ मधु मधु मधु' इति च जपेत् । ततोऽपसव्यं कृत्वा पिण्डपातनार्थं निर्मितहस्तमात्रचतुरस्रचतुरङ्गुलोच्छ्रितदक्षिणप्लवपिण्डिकाद्वयमध्यस्थाने सव्यहस्तधृतोपरिभागेन दक्षिणहस्तधृ-

तमूलेन पवित्रेण 'ॐ अपहता' इत्यादिमन्त्रेण प्रादेशमात्रमु-
ल्लिख्य पवित्रमैशान्यां (दिशि) क्षिपेत् । तत उभयत्र-
ॐ ये रूपाणि प्रतिमुञ्चमानाऽसुराः सन्तः स्वधया चरन्ति ।
परापुरो निपुरो ये भरन्त्यग्निष्टांल्लोकात्प्रणुदात्यस्मात् ॥

इति मन्त्रेण ज्वलदङ्गारं भ्रामयित्वा अङ्गारं दक्षिणतो निद-ध्यात् । तत उपमूलसकृदाच्छिन्नदक्षिणाग्रकुशत्रयं रेखायामा-स्तृणुयात् । एवमेवापररेखायामास्तृणुयात् । ततः सव्यं कृत्वा 'ॐ देवताभ्यः०' इति त्रिर्जपेत् । ततोऽपसव्यं कृत्वा पुटकषट्के जलतिलगन्धपुष्पाणि कृत्वा अर्घपात्रं वामहस्ते कृत्वा मोटक-तिलजलान्यादाय-'ॐ अद्यामुकगोत्र पितरमुकशर्मन् पार्वण-श्राद्धपिण्डस्थानेऽत्रावने निक्ष्व ते स्वधा' इत्यास्तृतदर्भमूलेऽवने-जनं दद्यात् । एवं पितामहापरपात्रमादाय कुशमध्ये, तृतीयपात्र-मादाय प्रपितामहाय कुशाग्रे दद्यात् । एवमपरपिण्डिकायामपि यथाक्रमं कुशमूलमध्याग्रेष्ववनेजनं दद्यात् । ततः सव्यञ्जनातिल-जलमध्वाज्यहुतशेषान्नेन षट्पिण्डान्निर्माय ( मधुघृताभ्यामभि-घार्य ) प्रथमं मोटकतिलजलपिण्डमादाय-'ॐ अद्यामुकगोत्र पितरमुकशर्मन् पार्वणश्राद्धे एष ते पिण्डः स्वधा' इति प्रथमा-वनेजनस्थाने पिण्डं दद्यात् । एवं पितामहप्रपितामहयोः प्रत्येकं तत्तदवनेजनस्थाने पिण्डं दद्यात् । एवमपरान्पिण्डान् द्वितीयपि-ण्डिकायां तत्तदवनेजनस्थाने मातामहादिभ्यो दद्यात् । पिण्ड-दानं सव्योपगृहीतदक्षिणहस्तेन कार्यम् । ततः प्रपितामहादूर्ध्वं त्रयाणां लेपभागभुजां तृप्तिमुद्दिश्य 'ॐ लेपभागभुजस्तृप्यन्तु' इति पठित्वा पित्रादिपिण्डाधारकुशमूले करं प्रोञ्छ्य ( सव्यं

कृत्वा ) द्विराचामेत् । ततो हरिं स्मृत्वा अपसव्यं कृत्वा दक्षिणामुखः 'ॐ अत्र पितरो मादयध्वं यथाभागमावृषायध्वम्' इति पठित्वा वामावर्तेनोदङ्मुखीभूय प्रीतमनाः श्वासं नियम्य तेनैव पथा परावर्तमानः पितॄन्भास्वरमूर्तीन् ध्यायन् 'ॐ अमीमदन्त पितरो यथाभागमावृषायिषत' इति जपेत् । ततः पूर्वदत्तावशिष्टजलयुतमवनेजनपात्रमादाय—'ॐ अद्यामुकगोत्र पितरमुकशर्मन् पार्वणश्राद्धे पिण्डेऽत्र प्रत्यवने निक्ष्व ते स्वधा' इति प्रथमपिण्डोपरि प्रत्यवनेजनं दद्यात् । एवमेव तत्तदवनेजनपात्रैः पितामहादिभ्यस्तत्तत्पिण्डोपरि प्रत्यवनेजनं दद्यात् । ततो नीवीं विस्रंस्य सव्येनाचम्य अपसव्यं कृत्वा वामेन पाणिनाऽऽनीय दक्षिणकरे सूत्रं कृत्वा—

ॐ नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्तसतो वः पितरो देष्म ॥

इति पठित्वा 'एतद्वः पितरो वासः' इत्युक्त्वा षट्सु पिण्डेषु सूत्रमुत्सृजेत् । मोटकतिलजलान्यादाय—'ॐ अद्यामुकगोत्र पितरमुकशर्मन् पार्वणश्राद्धपिण्डे एतत्ते वासः स्वधा' इति । एवमपरपिण्डपञ्चकेषु तत्तन्नाम्नोत्सृजेत् । ततो गन्धपुष्पधूपदीपताम्बूलानि प्रत्येकं पिण्डेषु दद्यात् । ततः 'ॐ शिवा आपः सन्तु' इति जलम्, 'ॐ सौमनस्यमस्तु' इति पुष्पम्, 'ॐ अक्षतं चारिष्टमस्तु' इति तण्डुलानन्नपात्रेषु क्षिपेत् । ततो मोटकतिलजलान्यादाय—'ॐ अद्यामुकगोत्रस्य पितुरमुकशर्मणः पार्वणश्राद्धे

दत्तैतदन्नपानादिकमक्षय्यमस्तु' इत्युत्सृजेत्। एवं पितामहादीनां षष्ठ्यन्तनाम्ना प्रत्येकमुत्सृजेत्। ततः सव्यं कृत्वा दक्षिणां दिशं पश्यन् सुमनाः पिण्डोपरि 'ॐ अघोराः पितरः सन्तु' इति पठन् पूर्वाग्रां जलधारां दद्यात्। ततः कृताञ्जलिः प्राङ्मुखः आशिषः प्रार्थयेत्—

ॐ गोत्रं नो वर्द्धतां दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च।

श्रद्धा च नो मा व्यगमद्बहु देयं च नोऽस्तु॥

अन्नं च नो बहु भवेदतिथींश्च लभेमहि।

याचितारश्च नः सन्तु मा च याचिष्म कञ्चन॥

एताः सत्या आशिषः सन्तु। ततोऽपसव्यं कृत्वा पिण्डोपरि सपवित्रकुशानास्तीर्य—

ॐ ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम्।

स्वधास्थ तर्पयत मे पितॄन्॥

इति मन्त्रेण सपवित्रकुशोपरि दक्षिणाग्रां जलधारां दद्यात्। ततः स्वस्थानस्थितानेव पिण्डान्नम्रीभूयाघ्रायोत्थापयेत्। ततः पिण्डाधारकुशानुल्मुकं च वह्नौ क्षिपेत्। ततः सव्येन देवार्घपात्रद्वयं सञ्चाल्याऽपसव्येन पित्राद्यर्घपात्राण्युत्तानीकृत्य सव्येन कुशत्रययवजलैर्दैवदक्षिणां दद्यात्। 'ॐ अद्यामुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकशर्मणां पार्वणश्राद्धसंबन्धिनां विश्वेषां देवानां कृतैतत्पार्वणश्राद्धप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे'। एवं मातामहादिसम्बन्धिविश्वेदेवश्राद्धदक्षिणां दद्यात्। अपसव्यं मोटकादिना—'ॐ अद्यामुकगोत्रस्य पितुरमुकशर्मणः कृतैत-

त्पार्वणश्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे'। एवं पितामहादिश्राद्धानामपि दक्षिणां दद्यात्। ततो—

ॐ वाजे वाजे वत वाजिनो नो धनेषु विप्राऽअमृताऽऋतज्ञाः। अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः॥

इति पित्रादीन् विसर्जयेत्। 'ॐ विश्वेदेवाः प्रीयन्ताम्' इति देवविसर्जनम्। ततः सव्येन 'ॐ देवताभ्यः०' इति त्रिर्जपेत्। ततोऽपसव्येन रक्षादीपं निर्वाप्य (सव्यं कृत्वा) हस्तौ पादौ प्रक्षाल्याचम्य—

ॐ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत्।
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः॥

इति पठित्वा, कर्मपूर्णतार्थं विष्णुं स्मरेत्। श्राद्धीयद्रव्याणि ब्राह्मणाय प्रतिपादयेत्। तदभावे जले वा क्षिपेत्। ततो बलिवैश्वदेवकर्मणी कुर्यादिति। एषपार्वणश्राद्धविधिः। एष एव विधिरुपरागनवान्नभक्षणतीर्थप्राप्तिनिमित्तकादिश्राद्धेषु बोद्धव्यः। तीर्थप्राप्तिनिमित्तकादिश्राद्धेष्वावाहनार्घाभाव इति विशेषः।

अथाभ्युदयिकश्राद्धम्—तत्र प्रथमं तन्नियतपूर्वकृत्यो मातृपूजाविधिः। प्रातःकाले स्नातः कृतनित्यक्रियः कुड्ये फलके वा स्थापितरक्षिकासप्तदशतये गणपतिसहितषोडशमातॄः, मृत्तिकामयीं श्रियम्, तदभावे तामपि रक्षिकायां पूजयेत्। मातरश्च—

गौरी पद्मा शची मेधा सावित्री विजया जया।
देवसेना स्वधा स्वाहा मातरो लोकमातरः॥
हृष्टिः पुष्टिस्तथा तुष्टिरात्मनः कुलदेवता। इति।

तत्र क्रमः—आचम्य प्राङ्मुख उपविश्य प्रथमरक्षिकामारभ्य

क्रमेण गणपतिरसि, गौर्यसि, पद्माऽसि, शच्यसि, मेधाऽसि, सावित्र्यसि, विजयाऽसि, जयाऽसि, देवसेनाऽसि, स्वधाऽसि, स्वाहाऽसि, मातरः स्थ, लोकमातरः स्थ, हृष्टिरसि, पुष्टिरसि, तुष्टिरसि, आत्मकुलदेवताऽसि, श्रीरसि। ततोऽक्षतानादाय पुनः प्रथमरक्षिकामारभ्य—

ॐ भूर्भुवः स्वः गणपते इहागच्छ इह तिष्ठ, ॐ भूर्भुवः स्वः गौरि इहागच्छ इह तिष्ठ, ॐ भूर्भुवः स्वः पद्मे इहागच्छ इह तिष्ठ, ॐ भूर्भुवः स्वः शचि इहागच्छ इह तिष्ठ, ॐ भूर्भुवः स्वः मेधे इहागच्छ इह तिष्ठ, ॐ भूर्भुवः स्वः सावित्रि इहागच्छ इह तिष्ठ, ॐ भूर्भुवः स्वः विजये इहागच्छ इह तिष्ठ, ॐ भूर्भुवः स्वः जये इहागच्छ इह तिष्ठ, ॐ भूर्भुवः स्वः देवसेने इहागच्छ इह तिष्ठ, ॐ भूर्भुवः स्वः स्वधे इहागच्छ इह तिष्ठ, ॐ भूर्भुवः स्वः स्वाहे इहागच्छ इह तिष्ठ, ॐ भूर्भुवः स्वः मातरः इहागच्छत इह तिष्ठत, 'ॐ भूर्भुवः स्वः लोकमातर इहागच्छत इह तिष्ठत, ॐ भूर्भुवः स्वः हृष्टे इहागच्छ इह तिष्ठ, ॐ भूर्भुवः स्वः पुष्टे इहागच्छ इह तिष्ठ, ॐ भूर्भुवः स्वस्तुष्टे इहागच्छ इह तिष्ठ, ॐ भूर्भुवः स्वः आत्मकुलदेवते इहागच्छ इह तिष्ठ, ॐ भूर्भुवः स्वः श्रीः इहागच्छ इह तिष्ठ। एवं प्रत्येकमावाहनस्थापने कुर्यात्।

ॐ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञ ँ समिमं दधातु।

विश्वे देवास ऽ इह मादयन्तामों ३ प्रतिष्ठ॥

इत्यक्षतान्विकीर्य्य एकदैव प्रतिष्ठां कुर्यात्। ततः पाद्यादि गृहीत्वा प्रथमत आरभ्य एतानि पाद्यार्घाचमनीयस्नानीयपुन-

राचमनीयानि 'ॐ गणपतये नमः' । इदमनुलेपनम् 'ॐ गणपतये नमः । इमानि पुष्पाणि 'ॐ गणपतये नमः' इति त्रिः पूजयेत् । एतानि गन्धपुष्पधूपदीपताम्बूलनैवेद्यानि 'ॐ गणपतये नमः' । एवमेव—ॐ गौर्यै नमः, ॐ पद्मायै नमः, ॐ शच्यै नमः, ॐ मेधायै नमः, ॐ सावित्र्यै नमः, ॐ विजयायै नमः, ॐ जयायै नमः, ॐ देवसेनायै नमः, ॐ स्वधायै नमः, ॐ स्वाहायै नमः, ॐ मातृभ्यो नमः, ॐ लोकमातृभ्यो नमः, ॐ हृष्टयै नमः, ॐ पुष्टयै नमः, ॐ तुष्टयै नमः, ॐ आत्मनः कुलदेवतायै नमः, ॐ श्रियै नमः इति पाद्यादिभिः प्रत्येकमर्चयेत् । ततः 'गणपतिश्रीसहिताः षोडशमातरः क्षमध्वम्' इति विसर्जयेत् । 'ॐ श्रीर्मयि रमस्व' इति । ततो घृतेन भित्तौ पञ्च, सप्त वा रेखा उत्तरोत्तरक्रमेण कुर्यात् । ताश्च फलेन प्रतीच्छेदनेन मन्त्रेण ।

ॐ वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम् । देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः ॥

इत्यनेन भित्तौ त्रिः, पञ्च, सप्त वा घृतधारा दद्यात् ।

अथाभ्युदयिकश्राद्धप्रयोगः—तत्र दक्षिणोत्तरक्रमेण द्वादशस्थानेषु प्रत्येकं आसादितद्रव्यं उवाक्षितप्रदीपदेशमागत्याऽऽचम्य प्राङ्मुख उदङ्मुखो वोपविशेत् । सव्येन सर्वं कर्म कर्तव्यम् । ऋजव एव कुशास्तिलकार्ये यवाः कर्तव्याः ।

ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।
यः स्मरेत्पुण्डरीकाक्षं सबाह्याभ्यन्तरः शुचिः ॥

'ॐ पुण्डरीकाक्षः पुनातु' इति श्राद्धीयद्रव्याणि सिञ्चेत्कुशो-

दकेन। ततः कुशयवजलान्यादाय—'ॐ अद्यामुकगोत्राणां मातृ-पितामहीप्रपितामहीनाममुकामुकामुकदेवीनां नान्दीमुखीनां, तथा-अमुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकामुकशर्मणां नान्दीमुखानां, तथा—अमुकगोत्राणां मातामहप्रमातामहवृद्धप्रमा-तामहानाममुकामुकामुकशर्मणां नान्दीमुखानाममुकगोत्रस्यामु-कस्य कर्तव्यामुककर्मनिमित्तकमाभ्युदयिकश्राद्धमहं करिष्ये' इति सङ्कल्पं कुर्यात्। ततो गायत्रीं, ॐ देवताभ्यः० इति त्रिर्जपेत्। ततः ॐ अद्यामुकगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकामुक-देवीनां नान्दीमुखीनामाभ्युदयिकश्राद्धसम्बन्धिनो विश्वेदेवा इदमासनं वो नमः' इति कुशत्रयरूपं सपवित्रं सयवमासनं दक्षिणत आरभ्योत्सृजेत्। एवं यथोत्तरम्—'ॐ अद्यामुकगोत्राणां पितृ-पितामहप्रपितामहानाममुकामुकामुकशर्मणां नान्दीमुखानामाभ्यु-दयिकश्राद्धसम्बन्धिनो विश्वेदेवा इदमासनं वो नमः'। 'ॐ अद्या-मुकगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकामुक-शर्मणां नान्दीमुखानामाभ्युदयिकश्राद्धसम्बन्धिनो विश्वेदेवा इद-मासनं वो नमः'। 'ॐ अद्यामुकगोत्रे मातरमुकदेवि नान्दीमुखि आभ्युदयिकश्राद्धे इदमासनं ते नमः'। एवं पितामहीप्रपिताम-हीभ्यामासनं दद्यात्। ततः 'ॐ अद्यामुकगोत्र पितरमुकशर्म-न्नान्दीमुखाभ्युदयिकश्राद्धे इदमासनं ते नमः' एवं पितामहप्र-पितामहयोरपि। 'ॐ अद्यामुकगोत्र मातामहामुकशर्मन्नान्दीमु-खाभ्युदयिकश्राद्धे इदमासनं ते नमः'। एवं प्रमातामहवृद्धप्र-मातामहयोरपि। तत आवाहनम् 'ॐ विश्वान्देवानहमावाहयि-ष्ये' इत्युक्त्वा—

ॐ विश्वे देवासऽआगत शृणुतामऽइम ँ हवम्।

एदं बर्हिर्निषीदत ।

इत्यावाह्य 'ॐ यवोऽसि यवयास्मद्द्वेषो यवयाऽरातीः' इति देवपात्रेषु यवान्विकीर्य—

ॐ विश्वे देवाः शृणुतेमꣳ हवं मे येऽअन्तरिक्षे यऽउपद्यविष्ठ ।
येऽअग्निजिह्वाऽउत वा यजत्राऽआसद्यास्मिन्बर्हिषि मादयध्वम् ॥

ॐ आगच्छन्तु महाभागा विश्वे देवा महाबलाः ।
ये यत्र विहिताः श्राद्धे सावधाना भवन्तु ते ॥

इति पठेत् । ततः 'ॐ नान्दीमुखान् पितॄनहमावाहयिष्ये' इत्युक्त्वा—

ॐ उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि ।
उशन्नु शतऽआवह पितॄन्हविषे अत्तवे ॥

इति पितॄनावाह्य 'ॐ अपहताऽअसुरा रक्षाꣳसि वेदिषदः' इति मात्रादिपात्रेषु यवान्विकीर्य—

ॐ आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः ।
अस्मिन्यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान् ॥

इति पठित्वा ततोऽर्घकरणम् । तत्र देवपूर्वकं सर्वेषु अर्घपात्रेषु पवित्राणि कृत्वा 'ॐ शन्नो देवीः०' इति मन्त्रेण जलं क्षिपेत् । ततो देवार्घपात्रेषु 'ॐ यवोसि०' इति यवान् क्षिपेत् । मात्रादिपात्रेषु—

ॐ यवोऽसि सोमदैवत्यो गोसवो देवनिर्मितः ।
प्रत्नमद्भिः पृक्तः पुष्ट्या नान्दीमुखान्पितॄन् लोकान् प्रीणाहि नः स्वाहा ॥

इति मन्त्रेण यवान् क्षिपेत् । ततः प्रत्येकं गन्धपुष्पे ( दूर्वा ) क्षिपेत । ततः प्रथमं देवार्घपात्रं वामहस्ते कृत्वा तत्रस्थं

पवित्रं भोजनपात्रे निधाय तदुपरि किञ्चिदुदकान्तरं दत्त्वा 'ॐ यादिव्या०' इति पठित्वा कुशत्रययवजलान्यादाय—'ॐ अद्यामुकगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकामुकदेवीनां नान्दीमुखीनाम् आभ्युदयिकश्राद्धसम्बन्धिनो विश्वेदेवा एष वो हस्तार्घो नमः'। एवं पित्रादिश्राद्धदेवेभ्यो, मातामहादिश्राद्धदेवेभ्योऽपि दद्यात्। ततो मातुरर्घपात्रमादाय पूर्ववत् 'ॐ यादिव्या०' इति पठित्वा कुशादीन्यादाय—'ॐ अद्यामुकगोत्रे मातरमुकदेवि नान्दीमुखि आभ्युदयिकश्राद्धे एष ते हस्तार्घो नमः'। एवं पितामहीप्रपितामह्योरपि दद्यात्। ततः पितृपात्रमादाय सर्वं पूर्ववत्कृत्वा कुशादीन्यादाय—'ॐ अद्यामुकगोत्र पितरमुकशर्म्मन्नान्दीमुखाऽऽभ्युदयिकश्राद्धे एष ते हस्तार्घो नमः'। एवं पितामहादिपञ्चभ्यो दद्यात्। ततोऽवशिष्टजलपवित्रयुतं प्रथमं देवार्घपात्रमादाय—'ॐ विश्वेभ्यो देवेभ्यः स्थानमसि' इति देवासनदक्षिणभागे उत्तानं स्थापयेत्। एवमपरदेवार्घपात्रद्वयं तत्तदासनदक्षिणभागे प्रत्येकं स्थापयेत्। ततः पितामहीप्रपितामह्यर्घपात्रद्वयास्थितं पवित्रादि मात्रर्घपात्रे निधाय मात्रर्घपात्रं पितामह्यर्घपात्रोपरि, तत्पात्रद्वयं प्रपितामह्यर्घपात्रोपरि धृत्वा दक्षिणकरेणादाय 'ॐ मातृभ्यः स्थानमसि' इति मात्रासनवामभागे न्युब्जीकुर्यात्। एवमेव पित्रर्घपात्राणां मेळनं कृत्वा पित्रासनवामभागे 'ॐ पितृभ्यः स्थानमसि' इति न्युब्जीकुर्यात्। एवमेव मातामहाद्यर्घपात्राणां मेळनं कृत्वा मातामहासनवामभागे 'ॐ मातामहादिभ्यः स्थानमसि' इति न्युब्जीकुर्यात्। ततो गन्धादिदानम्—'ॐ अद्यामुकगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकामुकदेवीनां नान्दीमुखीनामाभ्युदयिकश्राद्धसम्बन्धिनो

विश्वेदेवा एतानि गन्धपुष्पधूपदीपताम्बूलयज्ञोपवीतवासांसि वो नमः'। एवं पित्रादिदेवेभ्यो, मातामहादिदेवेभ्यश्च दद्यात्। ततः 'ॐ अद्यामुकगोत्रे मातरमुकदेवि नान्दीमुखि आभ्युदयिकश्राद्धे एतानि गन्धपुष्पधूपदीपताम्बूलसिन्दूरवासांसि ते नमः'। एवं पितामहीप्रपितामहीभ्यामपि दद्यात्। तथा 'ॐ अद्यामुकगोत्र पितरमुकशर्मन् नान्दीमुखाऽऽभ्युदयिकश्राद्धे एतानि गन्धपुष्पधूपदीपताम्बूलयज्ञोपवीतवासांसि ते नमः'। एवं पितामहादिपञ्चभ्योऽपि दद्यात्। ततः पात्रमर्घासनसहितं जलेन वेष्टयित्वा चतुष्कोणं मण्डलं कुर्यात्। ततः सजले पुटकादौ हस्तेनैव सघृतमन्नमादाय—'ॐ अग्नये कव्यवाहनाय स्वाहा, ॐसोमाय पितृमते स्वाहा, इत्याहुतिद्वयं जुहुयात्। ततोऽपसव्यं कृत्वा दक्षिणामुखः पातितवामजानुर्मोटकातिलजलान्यादाय 'ॐ इदमन्नमेतद्भूस्वामिपितृभ्यो नमः' इति भूस्वामिने किञ्चिदन्नं दद्यात्। ततः सव्यं कृत्वा प्राङ्मुख, उदङ्मुखो वा हुतशेषमन्नं देवपूर्वभोजनपात्रेषु किंचित्किञ्चिद्दद्यात्। पिण्डार्थं च किंचिदवशेषयेत्। ततोऽन्यदन्नं यथासम्भवं सर्वत्र परिविष्य घृतं जलं च तत्रोपनीय पात्रमालभेत्। तत्र क्रमः—उत्तानपाणिभ्यां प्रथमं देवपात्रं स्पृष्ट्वा—'ॐ पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा' इति पठित्वा—

'ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्।
समूढमस्य पांसुरे ॥

'कृष्ण हव्यमिदं रक्ष मदीयम्' इति पठित्वा 'ॐ इदमन्नम्' इत्यन्ने, 'ॐ इमा आपः' इति जले, 'ॐ इदमाज्यम्' इति घृते, 'ॐ इदं हविः' इति पुनरन्ने' दक्षिणाङ्गुष्ठमारोप्य 'ॐ यवोसि

यवयास्मद्द्वेषो यवयारातीः' इति यवान् विकीर्य्य कुशादीन्यादाय—'ॐ अद्यामुकगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकामुकदेवीनां नान्दीमुखीनामाभ्युदयिकश्राद्धसम्बन्धिनो विश्वेदेवा इदमन्नं सोपकरणं वो नमः'। यद्येकमेव पात्रं भवति तदा वामेन पाणिना पात्रमत्यजन्नेव 'ॐ इदं विष्णुः' इत्यादि पठित्वा यवक्षेपपर्यन्तं कृत्वा कुशादीन्यादाय पित्राद्युल्लेखेन पित्रादिदेवेभ्योऽप्यन्नमुत्सृजेत्। एवमेव मातामहादिदेवेभ्यः। भिन्नाभिन्नपात्रपक्षे 'ॐ पृथिवी ते' इत्यादीनां सर्वेषामावृत्तिः। ततो मातृपात्रमुत्तानाभ्यामेव कराभ्यां स्पृष्ट्वा 'ॐ पृथिवी ते पात्रम्' इत्यादि, 'ॐ इदं विष्णुः' इति पठित्वा 'ॐ कृष्ण कव्यमिदं रक्ष मदीयम्'। 'ॐ इदमन्नम्' इत्यन्ने, 'ॐ इमा आपः' इति जले, 'ॐ इदमाज्यम्' इति घृते, 'ॐ इदं हविः' इति पुनरन्ने दक्षिणाङ्गुष्ठमारोप्य 'ॐ अपहताऽअसुरा रक्षांऽसि वेदिषदः' इत्यन्नोपरि यवान्विकीर्य्य—'ॐ अद्यामुकगोत्रे मातरमुकदेवि नान्दीमुख्याभ्युदयिकश्राद्धे इदमन्नं सोपकरणं ते नमः'। एव पात्रालम्भनादिकं प्रत्येकं पितामहीप्रपितामहीभ्यामपि दद्यात्। एवं पितृपात्रमालभ्य 'ॐ पृथिवी ते पात्रम्' इत्यादि पठित्वा पूर्ववत्सर्वं कृत्वा—'ॐ अद्यामुकगोत्र पितरमुकशर्म्मन्नान्दीमुखाभ्युदयिकश्राद्धे इदमन्नं सोपकरणं ते नमः' इति पित्रेऽन्नमुत्सृजेत्। एवं पितामहादिपञ्चभ्योऽन्नमुत्सृजेत्। ततः प्राञ्जलिः 'ॐ अन्नहीनं' इत्यादि जपेत्। दर्भेषूपविश्य गायत्रीं त्रिर्जपित्वा 'ॐ मधु मधु मधु' इति, 'ॐ मधु वाता' इत्यादि त्र्यृचं जपेत्। पितृमन्त्रान् 'ॐ उदीरतामवर' इत्यादीञ्जपेत्। अन्यानि च पुरुषसूक्तादीनि पवित्राणि जपेत्। ततः प्रागग्रकु-

श्राग्रं भूमावास्तीर्य्य जलेन प्रोक्ष्य जलप्रोक्षितं सयवघृतमन्न कुशादिना—

ॐ अनग्निदग्धा ये जीवा ये प्रदग्धाः कुले मम ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥

इति मन्त्रेण कुशोपरि अन्नं विकिरेत् । तत आचम्य हरिं स्मृत्वा गायत्रीं त्रिर्जपेत् । चतुरस्रां पिण्डयोग्यां भूमिं परिस्कृत्य उत्तरोत्तरक्रमेण स्थानत्रये प्रादेशमात्रं परिमाय तत्र प्रागग्रां रेखां दर्भपिञ्जुलीमूलेन 'ॐ अपहताऽअसुरा रक्षाꣳसि व्वेदिषदः' इति कुर्यात् । ततः प्रत्येकं रेखात्रयोपरि—

ॐ ये रूपाणि प्रति मुञ्चमानाऽअसुराः सन्तःस्वधया चरन्ति ।
परापुरो निपुरो ये भरन्त्यग्निष्टाल्लोकात्प्रणुदात्यस्स्मात् ॥

इति मन्त्रेणाङ्गारान्भ्रामयेत् । तदुपरि प्रत्येकं कुशत्रयमास्तीय 'ॐ देवताभ्यः पितृभ्यश्च०' इति त्रिर्जपित्वा प्रत्येकमवनेजनं दद्यात् । तत्र क्रमः—यवजलगन्धपुष्पैर्नवपात्राणि पूरयित्वा एकं पात्रं वामहस्ते कृत्वा कुशादीन्यादाय—ॐ अद्यामुकगोत्रे मातरमुकदेवि नान्दीमुखि आभ्युदयिकश्राद्धे पिण्डस्थानेऽत्रावने निक्ष्व ते नमः' इति सर्वदक्षिणकुशत्रयमूले मात्रेऽवनेजनं दद्यात् । किञ्चिज्जलमवशेषयेत् । एवमेव पात्रान्तरमादाय कुशादींश्च, तत्कुशत्रयमध्ये पितामह्यै अवनेजनं दद्यात् । तत्कुशत्रयाग्रे प्रपितामह्यै अवनेजनं दद्यात् । ततश्चतुर्थपात्रमादाय—'ॐ अद्यामुकगोत्र पितरमुकशर्मन् नान्दीमुखाभ्युदयिकश्राद्धपिण्डस्थानेऽत्रावने निक्ष्व ते नमः' इति सर्वदक्षिणकुशत्रयमूले पित्रेऽवनेजनं दद्यात्, किञ्चिज्जलमवशेषयेत् । एवं पितामहप्रपितामहयोः पिण्डस्थानेऽवनेजनं दद्यात् । एवमेव पात्रान्तरमा-

दाय—'ॐ अद्यामुकगोत्र मातामहामुकशर्मन्नान्दीमुखाभ्युदयिक-श्राद्धपिण्डेऽत्रावने निक्ष्व ते नमः' इत्यपरकुशत्रयमूले मातामहा-यावनेजनं दद्यात्। एवं प्रमातामहवृद्धप्रमातामहयोरपि। ततो यवदधिबदरीघृतमिश्रान्नेन पिण्डान्निर्माय एकं पिण्डं कुशार्द्रीश्चा-दाय—'ॐ अद्यामुकगोत्रे मातरमुकदेवि नान्दीमुखि आभ्युदयि-कश्राद्धे एष ते पिण्डो नमः' इति तदवनेजनस्थाने पिण्डं दद्या-त्। एवमेव पितामहीप्रपितामहीभ्यां स्वीयस्वीयावनेजनस्थाने पिण्डं दद्यात्। ततश्चतुर्थपिण्डमादाय—'ॐ अद्यामुकगोत्र पितर-मुकशर्मन् नान्दीमुखाभ्युदयिकश्राद्धे एष ते पिण्डो नमः' इति पित्रवनेजनस्थाने पिण्डं दद्यात्। एवं पितामहप्रपितामहयोः। ततः सप्तमपिण्डमादाय—'ॐ अद्यामुकगोत्र मातामहामुकशर्म्म-न्नान्दीमुखाभ्युदयिकश्राद्धे एष ते पिण्डो नमः' इति तत्तदवनेज-नस्थाने पिण्डं दद्यात्। एवं प्रमातामहवृद्धप्रमातामहयोः दद्यात्। ततो दर्भमूले करं प्रोञ्छ्याचम्य हरिं स्मृत्वा 'ॐ अत्र मातरो मादयध्वं यथाभागमावृषायध्वम्' इति पठित्वा उदङ्मुखीभूय श्वासं नियम्य तेनैव पथा मुखं परावर्त्तयन् 'ॐ अमीमदन्त मातरो यथा भागमावृषायिषत' इति जपेत्। एवम् 'अत्र पितरो मादयध्वं यथाभागमावृषायध्वम्' इति जपित्वा उदङ्मुखीभूय श्वासं नियम्य तेनैव पथा मुखं परावर्त्तयन् 'ॐ अमीमन्दत' इत्यादि जपेत्। ( एवमेव मातामहादिपक्षे मन्त्रजपः )। त-तोऽवनेजनावशिष्टजलेन प्रत्यवनेजनं दद्यात्। तत्र क्रमः—ॐ अ-द्यामुकगोत्रे मातरमुकदेवि नान्दीमुख्याभ्युदयिकश्राद्धपिण्डेऽत्र प्रत्यवने निक्ष्व ते नमः' इति तत्पिण्डोपरि दद्यात्। एवं पिता-महीप्रपितामहीभ्याम्। तथा—'ॐ अद्यामुकगोत्र पितरमुकशर्म-

न्नान्दीमुखाभ्युदयिकश्राद्धे पिण्डेऽत्रप्रत्यवने निक्ष्व ते नमः' इति पिण्डोपरि प्रत्यवनेजनं दद्यात् । एवमेव तत्तत्पिण्डोपरि पितामहादिपञ्चभ्यो दद्यात् । ततो नीवीं विस्रंस्याचम्य हरिं स्मृत्वा सूत्राण्यादाय–

ॐ नमो वो मातरो रसाय नमो वो मातरः शोषाय नमो वो मातरो जीवाय नमो वो मातरः स्वधायै नमो वो मातरो घोराय नमो वो मातरो मन्यवे नमो वो मातरो मातरो नमो वो गृहान्नो मातरो दत्त सतो वो मातरो देष्म ॥

'एतद्वो मातरो वासः' इति मात्रादिपिण्डत्रयोपरि प्रत्येकं सूत्रं दद्यात् । ततः–

ॐ नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्त सतो वः पितरो देष्म ॥

'एतद्वः पितरो वासः' इत्यनेन मन्त्रेण पित्रादिपिण्डषट्कोपरि प्रत्येकं सूत्रं दद्यात् । ततः कुशत्रययवजलान्यादाय– 'ॐ अद्यामुकगोत्रे मातरमुकदेवि नान्दीमुखि आभ्युदयिकश्राद्धे पिण्डे एतत्ते वासो नमः' । एवमेव पितामहीप्रपितामहीभ्याम् । 'ॐ अद्यामुकगोत्र पितरमुकशर्मन्नान्दीमुखाभ्युदयिकश्राद्धे पिण्डे एतत्ते वासो नमः' । एवं पितामहादीनां पञ्चानां सूत्रं दद्यात् । ततो गन्धपुष्पधूपदीपताम्बूलादिभिः प्रत्येकं पिण्डमभ्यर्च्य 'ॐ शिवा आपः सन्तु' इति जलम् , 'ॐ सौमनस्यमस्तु' इति पुष्पम् , 'ॐ अक्षतं चारिष्टमस्तु' इति तण्डुलान् प्रत्येकं पात्रेषु निक्षिप्य कुशादीन्यादाय–'ॐ अद्यामुकगोत्राया मातुरमुकदेव्या

नान्दीमुख्या आभ्युदयिकश्राद्धे दत्तैतदन्नपानादिभिः प्रीयताम्' इत्यक्षय्योदकमुत्सृजेत् । एवं पितामह्याः प्रपितामह्याश्चाक्षय्योदकं दद्यात् । 'ॐ अद्यामुकगोत्रस्य पितुरमुकशर्मणो नान्दीमुखस्याभ्युदयिकश्राद्धे दत्तैतदन्नपानादिभिः प्रीयताम्' इति पित्रे । एवं पितामहादिपञ्चभ्योऽक्षय्योदकं दद्यात् । ततः 'ॐ अघोरा मातरः सन्तु' इति मातृपिण्डोपरि पूर्वाग्रां जलधारां दद्यात् एवं पितामही-प्रपितामह्योः । ततः 'ॐ अघोराः पितरः सन्तु' इति पित्रादि-पिण्डषट्कोपरि जलधारां दद्यात् । ततः—

ॐगोत्रं नो वर्धतां दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च

श्रद्धा च नो मा व्यगमद्बहुदेयं च नोऽस्तु ॥

अन्नं च नो बहु भवेदतिथींश्च लभेमहि ।

याचितारश्च नः सन्तु मा च याचिष्म कञ्चन ॥

'एताः सत्या आशिषः सन्तु' इत्याशिषः प्रार्थयेत । ततः सपवित्रकुशत्रयाणि प्रत्येकं मात्रादिपिण्डत्रये पित्रादिपिण्डत्रये, मातामहादिपिण्डत्रये च धृत्वा—

ॐऊर्ज्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् ॥

स्वधा स्थ तर्प्पयत मे मातृः ।

इति मात्रादिपिण्डोपरि दक्षिणाग्रां जलधारां दद्यात् । ततस्तथैव—

ॐ ऊर्ज्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् ।

स्वधा स्थ तर्प्पयत मे पितॄन् ।

इति पित्रादिपिण्डषट्कोपरि दक्षिणाग्रां जलधारां दद्यात् । ततः पिण्डानाघ्रायोत्थाप्य पिण्डाधारकुशानुल्मुकं च वह्नौ क्षिपेत् । अर्घपात्राण्युत्तानीकृत्य दक्षिणां दद्यात् । दक्षिणाद्रव्यं च फलमूले,

फलं मूलं वा प्रत्येकम्। तत्र क्रमः—'ॐ अद्यामुकगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकामुकदेवीनां नान्दीमुखीनामाभ्युदयिकश्राद्धसंबन्धिनां विश्वेषां देवानां कृतैतदाभ्युदयिकश्राद्धप्रतिष्ठार्थमिमे फलमूल वनस्पतिदैवते यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे'। एवं पित्रादिश्राद्धसंबन्धिनां विश्वेदेवश्राद्धदक्षिणां, मातामहादिश्राद्धसम्बन्धिविश्वेदेवश्राद्धदक्षिणां दद्यात्। 'ॐ अद्यामुकगोत्राया मातुरमुकदेव्या नान्दीमुख्या कृतैतदाभ्युदयिकश्राद्धप्रतिष्ठार्थमिमे फलमूले वनस्पतिदैवते' इत्यादि। (एवं पितामहीप्रपितामह्योरपि।) 'ॐ अद्यामुकगोत्रस्य पितुरमुकशर्मणो नान्दीमुखस्य कृतैतदाभ्युदयिकश्राद्धप्रतिष्ठार्थमिमे फलमूले वनस्पतिदैवते' इत्यादि। एवं पितामहादिपञ्चानां श्राद्धदक्षिणां दद्यात्। ततः 'ॐ वाजेवाजे' इत्यादिना मात्रादिविसर्जनम्। 'ॐविश्वेदेवाः प्रीयन्ताम्' इति देवविसर्जनम्। ततः 'ॐ देवताभ्यः०' इति त्रिर्जपेत्। (दीपनिर्वापणमाचमनम्। 'प्रमादात्' इत्यादि पाठः) श्राद्धीयवस्तुप्रतिपत्तिः।

इत्याभ्युदयिकश्राद्धपद्धतिः।

---

## अथ नित्यश्राद्धप्रयोगः।

आचम्य उदङ्मुख उपविष्टः—

ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा।
यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः॥

इति पठित्वा 'ॐपुण्डरीकाक्षः पुनातु' इति कुशत्रयजलेन श्राद्धीयद्रव्याणि सिञ्चेत्। ततः कुशत्रयतिलजलान्यादाय—'ॐ-अद्यामुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकामुकशर्म-

णाम् , अमुकगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानाममुका-मुकामुकशर्मणां नित्यश्राद्धमहं करिष्ये' इति सङ्कल्पं कुर्यात् । ततस्त्रिर्गायत्रीं जपित्वा—

ॐदेवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।

नमः स्वाहायै स्वधायै नित्यमेव नमोनमः ॥

इति त्रिर्जपेत् । ततोऽपसव्यं कृत्वा पातितवामजानुर्मोटक-तिलजलान्यादाय—'ॐअद्यामुकगोत्र पितरमुकशर्मन् नित्यश्राद्धे इदमासनं ते स्वधा' इति तिलजलप्रोक्षितं मोटकरूपमासनं दक्षिणाग्रं पित्रे दद्यात् । एवमेव पितामहादिपञ्चभ्यः प्रत्येकमासनानि दद्यात् । 'ॐअपहताऽअसुरा रक्षाꣳसि वेदिषदः' इति श्राद्ध-देशे तिलान्विकीर्य—

ॐ आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः ।

अस्मिन्यज्ञे स्वधयाऽमदन्तोधिब्रुवन्तु ते वन्त्वस्मान् ॥

इति जपेत् । ततः 'ॐअद्यामुकगोत्र पितरमुकशर्मन् नित्यश्राद्धे एतानि गन्धपुष्पधूपदीपताम्बूलानि ते स्वधा' इति यथासम्भवं पित्रे गन्धादि दद्यात् । एवमेव पितामहादिभ्योऽपि दद्यात् । ततो जलेन मण्डलं चतुष्कोणमन्नपात्रस्य चतुर्दिशं कृत्वाऽन्नपरिवेषणं कुर्यात् । ततो मधु दत्वा—

ॐमधुव्वाताऽऋतायते मधु क्षरन्ति सिन्धवः ।

माध्वीर्न्नः सन्त्वोषधीः ॥

मधुनक्तमुतोषसो मधुमत्पार्थिवꣳरजः ।

मधु द्यौरस्तु नः पिता ॥

मधुमान्नो व्वनस्पतिर्म्मधुमाँ२ऽअस्तु सूर्यः ।

माध्वीर्गावो भवन्तु नः ॥

'ॐ मधु मधु मधु' इत्यभिमन्त्रयेत् । ततोऽन्नपात्रं न्यस्ता-भ्यामधोमुखाभ्यां पाणिभ्यां स्पृशन्—

ॐपृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽअमृतेऽअ-मृतं जुहोमि स्वाहा ।

ॐइदं विष्णुर्व्विचक्रमे त्रेधा निदधे पदम् ।
समूढमस्य पाᳬसुरे ।

इति जपित्वा वामहस्तेनान्नपात्रमत्यजन् 'ॐकृष्ण कव्यमिदं रक्ष मदीयम्' इति पठित्वा । 'ॐइदमन्नम्' 'ॐइमा आपः' 'ॐइदमाज्यम्' 'ॐइदं हविः' इत्यन्नजलघृतेषु पुनरन्ने च द-क्षिणाङ्गुष्ठं निवेश्य'ॐअपहताऽअसुरा रक्षाᳬसि व्वेदिषदः' इत्य-न्नोपरि तिलान्प्रक्षिप्य मोदकादीन्यादाय–'ॐअद्यामुकगोत्र पि-तरमुकशर्मन् नित्यश्राद्धे इदमन्नं सोपकरणं ते स्वधा' इति पित्रेऽन्नमुत्सृजेत् । एवं पितामहादिभ्योऽप्यन्नमुत्सृजेत् ।

ॐअन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत् ।
तत्सर्वमच्छिद्रमस्तु ॥ इति जपेत् ।

ततो दर्भेष्वासीनस्तत्र गायत्रीं, 'मधुव्वाता' इत्यादित्र्यृ-चम् , 'ॐ मधु मधु मधु' इति जपेत् । ततः–

ॐकृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजे वामवाँ ऽइभेन ।
तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि व्विध्य रक्षसस्तपिष्ठैः ॥१॥
तव भ्रमासऽआशुया पतन्त्यनुस्पृश धृषता शोशुचानः ।
तपूᳬष्यग्ने जुह्वा पतङ्गानसन्दितो व्विसृज व्विष्वगुल्काः ॥२॥
प्रति स्पशो व्विसृज तूर्णितमो भवा पायुर्व्विशोऽ अस्या अदब्धः ।
यो नो दूरेऽअघशᳬसो योऽअन्त्यग्ने माकिष्टे व्यथिरादधर्षीत् ॥३॥
उदग्ने तिष्ठ प्रत्यातनुष्वन्यमित्राँ२ ऽओषतात्तिग्महेते ।

यो नोऽ अरातिᳬ समिधान चक्रे नीचा तं धक्ष्यत सन्नशुष्कम्॥४॥
ऊर्ध्वो भव प्रतिविद्ध्याद्धयस्मदाविष्कृणुष्व दैव्यान्यग्ने ।
अव स्थिरा तनुहि यातुजूनां जामिमजामिम्प्रमृणीहि शत्रून् ।
अग्नेष्ट्वा तेजसा सादयामि ॥ ५ ॥

इति रक्षोघ्नीर्ऋचः पठेत् । ततस्तिलान्भूमौ क्षिप्त्वा 'ॐ उदीरताम्' इत्यादिपितृमन्त्रान्, 'ॐ सहस्रशीर्षा' इत्यादिपुरुषसूक्तम्, 'ॐ आशुः शिशान' इत्यादिकमप्रतिरथमन्यानि च पवित्राणि यथाशक्ति जपेत् ।

ॐनमस्तुभ्यं विरूपाक्ष नमस्तेऽनेकचक्षुषे ।
नमः पिनाकहस्ताय वज्रहस्ताय वै नमः ॥

इति पठेत् । ततः 'ॐ अद्यामुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकामुकशर्मणां, अमुकगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकामुकशर्मणां कृतैतन्नित्यश्राद्धप्रतिष्ठार्थमेककाकिणीमूल्यकं रजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे' इति मोटकादिना दक्षिणां दद्यात् । ततः सव्यं कृत्वा 'ॐदेवताभ्यः' इति त्रिः पठेत् ।

ॐप्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥

इति पठित्वा विष्णुं स्मरेत् । नित्यश्राद्धीयमन्नं ब्राह्मणाय प्रतिपादयेत्, जले वा क्षिपेत् ।

इति श्राद्धविवेके उत्तरक्रियापरिच्छेदश्चतुर्थः ।

॥ इति महामहोपाध्याय श्रीरुद्रधरकृतः श्राद्धविवेकः समाप्तः ॥

TIRUPATI.

शुभं भूयात् ।